न ग्रामे नाश्रमे वापि नोद्यानं काननेऽपि वा ।
न तत्रवृक्षच्छाया वा न तटीकं सरोऽपि वा ।। ५३ ।।

न वाप्यो दीर्धतावापि न कलापो वा युधिष्ठिरः ।
न किञ्चिद्विश्रमस्थानं पथि तस्मिन्युधिष्ठिरे ।। ५४ ।।

इति वचनाच्च । तत्रत्यापानुगुण यातनाश्च मार्गेऽनुभूयन्ते ।

भग्नपादोरुहस्ताङ्गैर्भग्नदन्तशिरोरुहैः ।
भिन्नकण्ठोष्ठनासैश्च गन्तव्यं जीवघातकैः ।। ५५ ।।

पातयन्तिय ये जीवान् पाप दुःखापयन्ति च ।
राक्षसैश्च श्वभिश्चैव भक्ष्यमाणा व्रजन्ति ते ।। ५६ ।।

ये हरन्ति दुरात्मानः परस्वं पापकारिणः ।
पाषाणैरुल्मुकैर्दण्डैः काष्ठधातैश्च सूकरैः ।। ५७ ।।

हन्यमानैः क्षताकीर्णैर्गन्तव्यं तद्यमालयम् ।

इति । मानुषलोकयमलोकयोरन्तं भगवतोक्म् -

षटशीतिसहस्राणि योजनानां युधिष्ठर ! ।
मनुष्यस्य च लोकस्य यमलोकस्य चान्तरम् ।। ५८ ।।

इति । इतोप्येतं तु दुःखकरं यमस्य पुरोवस्थानमित्याह **यमस्येति** । ततश्च तत्कर्मानुगुणं तन्नियोगेन सम्पन्नयातनाश्चावनता प्राप्नोतीत्याह **तन्नियोगेति** ।

**तन्नियोगस्समायाता यातानाश्च सहस्रशः ।**
**श्रुत्वा स्मृत्वा च दूयेऽहं तत्प्रवेशभयाकुलः ।। २३ ।।**

यथोक्तं तेनैव -

तत्र चापगता पापाविष्ठाः कोपेष्वनेकशः ।
कूजन्तो वर्षकोटिस्तु क्लिश्यन्ते वेदनार्तिनः ।। ५९ ।।

ततश्च मुक्ताः कालेन लोके चास्मिन्नराधमाः ।
विष्ठाः त(म)भिगच्छन्ति जन्मकोटिशतं कृपा ।। ६० ।।

इति । तथा च -

कृतः पातकिनः पापाः[1] प्राणत्यागादनन्तरम् ।
याम्य [2]पवनमासाद्य [3]स्वमश्नन्ति दारुणम् ।। ६१ ।।

यमस्य पुरुषैर्घोरैः कृष्यमाणा यतस्ततः ।
सुकृच्छ्रेणानुकारेण नीयमानाश्चते तथा ।। ६२ ।।

श्वभिः शृगालैः क्रव्यादैः काककङ्कवृकादिभिः ।
अग्नितुण्डैर्भक्ष्यमाणा भुजङ्गैर्वृश्चिकैस्तथा[4] ।। ६३ ।।

अग्निना दह्यमानाश्च नुद्यमानाश्च कण्टकैः ।
क्रकचैः पाट्यमानाश्च पीड्यमानाश्च तृष्णया ।। ६४ ।।

क्षुधया व्यथमानाश्च घोरैर्व्याघ्रगणैस्तथा ।
पूयशोणितगन्धेन मूर्च्छमानाः पदे पदे ।। ६५ ।।

परान्नपानं लिप्सन्तस्ताड्यमानाश्च किङ्करैः ।
काककङ्कवृकादीनां भीमानां सदृशाननैः ।। ६६ ।।

क्वचित् क्वाथ्यन्ति तैलेन ताड्यन्ते मुसलैः क्वचित्" ।
आयासीषु च भिध्यन्ते शिलासु च तथा क्वचित् ।। ६७ ।।

---

1. "सर्वे" इति विष्णुस्मृतौ, 2. "पन्थानं" इति विष्णुस्मृतौ 3. "दुःखं" इति विष्णुस्मृतौ
4. अयंश्लोकः मातॉकायां नास्ति । अतः पुस्तकसहकारेणात्र संयोजितम् ।।

क्वचिद्वान्तमथाश्नन्ति क्वचित्पूयमसृक् क्वचिच् ।
क्वचिद्विष्ठां क्वचिन्मासं पूयगन्धिः सुदारुणम् ।। ६८ ।।

अन्धकारेषु तिष्ठन्ति दारुणेषु यथा क्वचित् ।
कृमिभिर्भक्ष्यमाणाश्च [1]व्रजतुण्डैस्सुदारुणैः ।
[2]क्वचित्कुम्भिपच्यन्तो क्वचिद्वामेध्यमध्यगः ।। ६९ ।।

[3]भग्नपृष्ठशिरोग्रीवाः सूचिकण्ठाः सुदारुणाः ।
कूटागारप्रमाणैश्च शरीरैर्यातनाक्षमैः ।।

एवं पातकिनः पापमनुभूय सुदुःखिताः ।
तिर्यग्योनौ प्रपद्यन्ते दुःखानि विविधानि च ।। ७१ ।।

इति । पापिनामनुभाव्यान्नरकानाह - यमः ।

नरको रौरवो रौद्रः कालसूत्रं तदैव च ।
ताप्तकुम्भोमहाज्वाल स्वयंलोकविहङ्गमः ।। ७२ ।।

कौठीरः कृमिभक्ष्यैश्च(लापोद) पिशिताशनः ।
अपाकलितयो वा हि रुधिरौद्रस्तथैव च ।। ७३ ।।

वैतरण्यश्च काकश्च असिपत्रवनं तथा ।
अग्निज्वालो महाघोरस्सन्देशोऽशुचिभोजनः ।। ७४ ।।

एते द्वाविंशतिः प्रोक्ता नरकायतनाहिताः ।
एते दुष्कृतकर्माणः यतन्तीह पृथक् पृथक् ।। ७५ ।।

---

1. वह्नितुण्डैश्च,  2. क्वचिच्छीतेन बाध्यन्ते,
3. मातृकायां पूर्वार्धं नास्ति । पुस्तकसहायेनात्रपूरितम् ।

इति । अनुभव का(ला)वधेश्चोक्तः । अकृतप्रायश्चित्तातिपातकिनः पर्यायेणकल्पं पच्यन्ते । महापातकिनो मन्वन्तरम् । उपपातकिन-श्चतुर्युगमित्यादि दृष्टव्यम् । ततः परं कर्मविशेषेण तत्तद्योनिषु जायन्ते । तामिस्रमन्धतामिश्रयाः एतानां न पुनरावृत्तिः । यथा कौण्डरश्रुतिः-"परद्वेषो गुरुद्वेषश्रुतिद्वेषास्तदवमन्तारंश्चामूर्खसति । ते वै ततोऽवरुह्य तमसि प्रवर्तन्ते, नवैते उत्तिष्ठन्तेऽपि कर्हिचित् श्वभ्रं वाव तदित्याहुः" । "अत चैतन्य ब्रह्मद्विषस्ते नासुरा वा यदि तै नैतदनुभूयेमं लोकमनुव्रजन्तीति । स्मर्यते च -

गच्छन्ति पापिनस्सर्वे नरकं नात्र संशयः ।
तत्र भुक्त्वा पतन्त्येव येद्विषन्ति जनार्दनम् ।।

महातमसि मग्नानां न तेषामुद्गतिः क्वचित् ।
इतरेषां तु पापानां पुनः प्राप्तश्च विद्यते ।।

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।

इति सर्वत्र नियमः । (पञ्चकेषु न संशयः ।।)

तथा भारते -

"रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा" ।।
कुम्भीपाक इति प्रोक्तो अनित्यो नरकाणि तु ।।

तमिश्रास्त्वन्धतामिश्रौ द्वौ नित्यौ संप्रकीर्तितौ ।
इति सप्तप्रकाराणि बलीयानुत्तरोत्तरः ।।
एतानि क्रमशो गत्वा पच्यन्ते पापकर्मिणः ।। इति ।।

महातमसि न सुखलेशोऽपि (विद्यते) यथा भविष्यत्पर्वणि -

तिर्यक्षुनरके चैव सुखलेशो विधीयते ।
नान्धेतमसि मग्नानां सुखलेशोऽपि कश्चन ।।

इति । तथा पाद्मे -

अतिप्रिये यथाराजा न दुःसहते क्वचित् ।
अत्यप्रिये सुखमपि तथैव पुरुषोत्तमः ।। इति ।।

एवं शास्त्ररिद्धिं यातनाजातं श्रुत्वा श्रुतितोऽवगम्य, स्मृत्वा धर्मशास्त्रेभ्यश्चावगम्य, यद्वा - शास्त्रतः श्रुत्वास्मृत्वा संस्कृत्य नरकप्रवेशभयेनाकुले चित्रोऽहं दुःखितो भवामि । ननु नरकानुभवस्य सावधित्वान्नशोकः कार्य इत्यत्राह - पुनश्चेति ।

**पुनश्चगर्भजन्मादि प्रवेशं कर्म निर्मितम् ।**
**मुहुर्विचिन्त्यसञ्चितं कम्पते जलचन्द्रवत् ।। २४ ।।**

अयमर्थः - पूर्वकर्मवशेन लोकान्तरं प्राप्य तत्र कर्मफलं भुक्त्वा, अवसाने पुनरमुल्लोकं प्राप्य गर्भ, जन्म, बाल्य, यौवन, वार्धक्य, मरणादिकमनुभूय तत्राकृतकर्तृवशात् पुनश्चलोकान्तरं गच्छतीति, न कुत्रापि जीवस्य संसरणावधिरिति । एतत्सर्वं मुहुर्विचिन्त्य जलचन्द्रवन्ममहृदयं कम्पते । अयं तु संसार-स्वभावः । तन्मध्यपातिनस्ते किमालम्बनमस्तीति भगवतोक्तम् -

एवं संस्कृति चक्रस्थे भ्राम्यमाणे स्वकर्मभिः ।
जीवेदुःखाकुले विष्णोः कृपाकाप्युपजायते ।। इति ।।

प्रमारत्नमालोक्य भगवतः श्रियःपते । तन निर्हेतुक कृपैवमालम्बनं मयि प्रवर्तयेत्याह एवं **मामिति** ।

**एवं मां भवचक्रेऽस्मिन् भ्रममाणं सुदुःखितम् ।**
**कृपया केवलं श्रीमन् रक्ष नाथ कटाक्षतः ।। २५ ।।**

भवचक्रेभ्रममाणं सुदुःखितमित्यनेन स्वस्य कृपा विषयत्वमुक्तम् । स्वार्थनिरपेक्ष परदुःखासहिष्णुता हि कृपा । यदि मम धियां नरकेऽपि तवकरुणाकर इति नाम महावृक्ष इतिवत्, संज्ञामात्रमेव स्यात् । किमर्थमेवं मदन्तिकस्ते मया सम्बन्ध इत्यत्राह **नाथेति** । निरुपाधिकस्वामि । खल्वसि ! । एतत् त्वयाप्यन्यथाकर्तुं न शक्यते । स्वपदार्थस्य हानिः स्वामिन एव रक्षतीतिवचनं न साधनानुष्ठानरूपं, अचिद्व्यावृत्तिमात्रमेव स्पष्टयति । फल सदृशरूपत्वाभावात् । श्रीमान् ! पुरुषकारवैधुर्यनिमित्त विळम्भो न विद्यते । श्रीमान् ! आश्रितविषयेऽति वात्सल्यादि गुणपूर्णयाश्रिया दोषोद्घाटनं कृतेऽपि मद्भक्तानिषिद्धं न कुर्वन्ति चैतद्विहितमेव कृतमिति । अत्र "अनालोचित विशेषाशेषलोकशरण्य !" इति । केवलेत्यनेन चेतनागत किञ्चिदारोपाधि नैरपेक्ष्यं द्योत्यते ।

**अहमुत्पत्तिवेलायां त्वत्कटाक्षाभिवीक्षितः ।**
**सत्वोद्रेकेण सम्पन्नस्सद्गत्याकाङ्क्षयान्वितः ।। २६ ।।**

अथ भगवत्कटाक्षे जाते सत्वगुणयुक्तस्य मुमुक्षोराचार्यमुपगम्य तदुक्तमार्गेण वर्तमानस्य भगवत्कर्तव्यं न बह्वस्ति । अर्चिरादि मार्गनयनमेकमेवेति तत्प्रतिपादनाय यतते सत्वोद्रेकेणेत्यादिना । देवतान्तर कटाक्षे हि -

पश्यत्येनं जायमानं ब्रह्मरुद्रोऽथवा पुनः ।
रजसातमसाचैव मानसं समभिप्लुतम् ।। इति ।।

राजसतामसाभावयुक्तं त्वं परमसत्वाधिरेकि नारायणकटाक्षे -

जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्विकः स तु विज्ञेयः सर्वे मेक्षार्थचिन्तकः ।।

इति । परसात्त्विको मुमुक्षोश्च भवति । गम्यत इति गतिः । सद्गतिर्मोक्षः । तत्राकाङ्क्षायुक्तः । पुनश्च कटाक्ष प्रभावमनुसन्धत्ते बाह्येष्वित्यादिना ।

**बाह्येषु विमुखोनित्यं वैदिकोऽभिमुखस्तथा ।**
**सद्भिस्सहैव निवसन् सत्कथाश्रवणे रतः ।। २७ ।।**

तत्र बाह्यशब्देन कुदृष्टयोर्लक्ष्यन्ते । बाह्यास्तु चार्वाक, जैन, कापालादयः । कुदृष्टयस्तु-कपिल हिरण्यगर्भादयः । तत्र विमुखः वैदिकेत्रैविद्यवृद्धपराङ्कुशपरकालनाथमुनियतिवरप्रमुखनिर्मितपरम सात्त्विकेतिहासपुराणस्मृतिसदागमसिद्धेऽर्थेऽभिरतः, नैकदेशेऽप्य-प्रामाण्यं मन्वानो सद्भिर्भगवत्स्वरूपरूपगुणविभूति प्रतिपादनचतुरैः सात्त्विकाग्रेसरैर्भगवद्वैभवश्रुतिः एवमेवैतदिति महाविश्वासयुक्तैर्ज्ञान-भक्तिवैराग्यैकभूमिभिरक्रोधाद्यात्मगुणभूषितैश्च। स्मर्यते च -

"सङ्घस्सर्वात्मनात्याज्यस्सचेत्युक्तं न शक्यते" ।
साधुभिस्सहकर्तव्यस्सन्तस्सङ्घस्य भेषजम् ।।

साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः ।
ते पुनन्त्युक्तकालेन दर्शनादेव साधवः ।।

इत्यादि । सत्कथाश्रवणे रतः - भगवद्वैभवप्रतिपादकशास्त्र-श्रवणैकप्रियः । यथा शाण्डिल्यः -

सम्भूया तु कथां कुर्यात्सच्छास्त्राणि विलोकयन् ।
सत्कर्म सततं कुर्यात्सत्कर्म च वर्जयेत् ।।

सच्छास्त्रं पावनैर्नित्यं शास्त्रार्थस्यापि शिक्षया ।
शास्त्रार्थज्ञापनैर्वापि शिक्ष्येच्छास्त्रमादरात् ।।

न स्मर्तव्यो वैष्णवेन वेदमन्त्रोऽप्यवैष्णवः ।
काव्यालापोऽपि जप्यानो यत्र सङ्कीर्त्यतेऽच्युतः ।।

उक्तं च व्यासेनापि -

न शब्दशास्त्राभिरतस्य मोक्षो न चैव रम्यावसतः प्रियस्य ।
न भोजनाच्छादन तत्परस्य न लोकचित्तग्रहणे रतस्य ।।

एकान्तशीलस्य दृढव्रतस्य पञ्चेन्द्रियप्रीतिनिवर्तकस्य ।
अध्यात्मविद्यागतमानसस्य मोक्षद्ध्रुवो नित्यमहिंसकस्य ।।

इति । भगवत्कटाक्षादिना मुक्तानामाचार्यप्राप्तिहेतुत्वेन तमाह सदेति ।

**सदाचार्योपसत्ता च साभिलाषस्त्वदात्मकम्[1] ।**
**तत्त्वज्ञाननिधिं सत्त्वनिष्ठं सद्गुण सागरम् ।। २८ ।।**

सदाचार्यः वक्ष्यमाणलक्षणः । तस्योपसंवित्ताः **साभिलाषः** । एव मधिकारि स्वरूपमुक्त्वा आचार्यलक्षणं तद्वरणप्रकारञ्चाह **त्वदात्मकमित्यादि** । त्वदात्मस्वरूपं यस्य सः त्वदात्मकः ।

स्मर्यते हि -

आचार्यः सहरिस्साक्षाच्चरस्रूपी न संशयः ।
तस्मात्पुत्रकळत्रादि तमेकं गुरुमाश्रयेत् ।।

इति । श्रुतिश्च देवाचार्यमुपासीत । श्रीशास्त्रे च

साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनूम् ।
मग्नानुद्धरते लोकान्कारुण्याच्छास्त्रपाणिना ।। इति ।

गुरुरेव परब्रह्म गुरुरेव परं धनम् ।
गुरुरेव परःकामो गुरुरेव परायणम् ।
गुरुरेव परा विद्या गुरुरेव परागतिः ।।

**तत्त्वज्ञाननिधिं** - सर्वशास्त्रसारश्रीमदष्टाक्षरसिद्धस्वरूपसाधन पुरुषार्थविषययज्ञादार्थज्ञानैकराशिम् । अनेन भ्रान्तव्यावृत्तिः । अनेन कुलजातस्यापि तत्त्वज्ञानभावेनाचार्यत्वमित्युक्तं स्यात् । यथाचार्यः 'कुलजातापि ज्ञानभक्त्यादि वर्जित' इति । अत एवोक्तं वेदान्ताचार्यैः -

स हिरण्यसुतत्वेन प्रह्लादस्तर्ज्यते किमु ।
किं वा विरोचनस्तस्य पुत्रत्वात्परिगृह्यते ।। इति ।

ततः खलुभिन्नदेशीयानां पराङ्कुशपरकालनाथमुनियामुनमुनियति-वरकूराधिपादीनां गुरुपरम्परायामन्वयः । रामाश्रिताज्ञाननिवारकत्वं ज्ञानिन एव । अत एव गुरुत्वम् -

गुशब्दस्त्वन्धकारस्याद्रुशब्दस्तन्निरोधकः ।
अन्धकारनिरोधत्वाद् गुरुरित्यभिधीयते ।।

इति । **सत्त्वनिष्ठं** इदं विशेषणं पूर्वस्य हेतुः । रजस्तम-स्सङ्कलितपरसत्त्वगुरुत्वं नैकाश्रयमनेन विप्रलम्भव्यावृत्तिः । **सद्गुणसागरमिति** सदाचार्यप्रकरणोक्तसर्वगुणाकरमित्यर्थः । तथा-

"आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः" ।
मन्त्रज्ञो मन्त्रभक्तश्च सदामन्त्राश्रयः शुचिः ।।

गुरुभक्तिरसमायुक्तो पुराणज्ञो विशेषतः ।
एवं लक्षणसंपन्नो गुरुरित्यभिधीयते ।।

---

1. तदात्मकम् - PM 729. Adyar Library.
Vol. 155. - TMSSM Library, Thanjavur

तथा‌ह योगयाज्ञवल्क्यः -

गुरवः पञ्चसर्वेषां चतुर्णां श्रुतिबोधिताः ।
माता पिता तथा चार्यो मातुलश्श्वशुरस्तथा ।।

एषा मुख्याः स्त्रियःप्रोक्ता आचार्या पितरौ तथा ।
एषु मुख्यतमश्चैकः आचार्यः परमार्थविद् ।।

तमेवं ब्रह्मविच्छ्रेष्ठं नित्यकर्मपरायणम् ।
गुरुशुश्रुषयेन्नित्यं तिष्ठाबोध्येन वा गुरुः ।। इति ।

एतत्सर्वमभिप्रेत्योक्तं न्यासविंशतौ-

सिद्धं संत्संप्रदाये स्थिरधियमनधं श्रोत्रियं ब्रह्मनिष्ठं
सत्वस्थं सत्यवाचं समयनियतया साधुवृत्या समेतम् ।
डम्भासूयादि मुक्तं जितविषयगणं दीर्घबन्धुं दयालुं
स्कालित्ये शासितारं स्वरहितपरं देशिकं भूष्णुरीप्सेत् ।। इति ।

**सताङ्गतिं कारुणिकं तमाचार्यं यथाविधि ।**
**प्रणिपातनमस्कारप्रियवग्भिश्च तोषयन् ।। २९ ।।**

**सतां**-वैष्णवाग्रेसराणां, **गतिं**-प्रापकं, **कारुणिकं**-निरुपाधिकसर्वविध कृपापरिपूर्णं अनेनोपाधिं विना संसारिणामनर्थमालोच्य भगवदनुभव योग्याः कथनेवं भवेयुः ? इति स्वकृत्यं मन्वानो सदुपदेशादिभिः करोतीत्यर्थं सम्पादयेदित्युक्तं भवति । **तं**-एवङ्गुणविशिष्टं **आचार्यं यथाविधि**-उक्तप्रकारेण **प्रणिपातः**-प्रणामः नमस्कारः - स्वगोत्राद्युच्चारण पूर्वकं गुरुपादग्रहणम् । अत एव हि प्रणिपत्याभिधाध्यानेति द्वयमपि मैत्रायणीयचरिते प्रणामभेद-

लक्षणं च विष्णुधर्मोक्तं --

"उरसा शिरसा दृष्ट्या मनसा श्रवणेन च ।
द्वाभ्यां कराभ्यां बाहूभ्यां प्रणामाष्टाङ्ग उच्यते" ।।

इति । तथा भागवते -

कूर्मवच्छतुरः पादान्भूगतं पञ्चमं शिरः ।
मनोबुध्यभिमानेन प्रणामाष्टाङ्ग उच्यते ।।

दण्डप्रणामलक्षणम् -

दण्डवच्छयनं भूमावङ्गुलिस्संप्रसार्य च ।
ख्यातो दण्डप्रणामोऽयं दशचान्द्रयणात्परम् ।।

इति । तथा विष्णुसंहितायां च केनचिद्विशेषाः उक्ताः ।

तदेवं मनसा ध्यात्वा मूर्ध्नित्वञ्जलिं न्यसेत् ।
मस्तिष्क इति विज्ञेयो हृदयाञ्जलि संयुतम् ।।

संन्यसेत्तत्प्रणामस्तु सम्पुटस्समुदाहृतः ।
साञ्जलिर्नतकायस्यात्तत्प्रह्व इति गीयते ।।

प्रणिपत्यस्य बध्वो न स्वस्ति बन्धनमेव वा ।
पादाङ्गुलिभ्यां जानुभ्यां ललाटेनावनिं स्पृशेत् ।

पञ्चाङ्ग इति विज्ञेयः पञ्चाङ्गैः करणादयः ।
अञ्जलिं सम्प्रसार्येव सम्यग्ध्यानपरायणः ।।
भूम्यां च दण्डवच्छेत्स्यात् प्रणामो दण्ड उच्यते ।।

इति । **प्रियवाग्भिः, चकारेण** - द्रविणप्रदानादिः । एवं विधास्यैव शिष्यत्वम् -

शरीरं वस्तु विज्ञानं घनःकर्मगुणानिमान् ।
गुर्वर्थं धारयेद्यस्तु स शिष्यानेतरस्मृतः ।।

इति वचनात् । शक्त्यनुसारेण प्रतिपादनविधिरप्यस्ति । ब्रह्मविद्याप्रदानस्य देवैरपि न शक्यते प्रतिपादनमथवा प्रदानं शक्तितो आदरादिति । विद्यान्तरस्य प्रतिपादनभावेन ब्रह्मविद्यायाः तन्नास्ति । यद्यस्ति, ईश्वरद्वित्वमपि स्यात् । अत एव ब्रह्मादिभिस्सर्वैरपि कर्तुं न शक्यतेत्युच्यते । तर्हि किं कर्तव्यं इति चेत्, शक्तितो दद्यात् । वित्तशाठ्यं न कार्यं प्रत्युपकारत्वेन देयम्। सन्तु प्रीतिपूर्वकं, न किञ्चित्कुर्वतः शेषत्वमिति मत्वा स्वरूपप्राप्तमिति ध्येयम् ।

**तत्प्रसादवशेननैव तदङ्गीकारलाभवान् ।**
**तदुक्तं तत्त्वयाथात्म्य ज्ञानामृतसुसम्भृतः ।। ३० ।।**

"तत्प्रसादवशेननैव तदङ्गीकार लाभवान्" - आचार्य प्रसादेनैव तदङ्गीकार रूप महाधनलाभः । न ह्यतिभयगुणलेशोऽस्ति। तथोक्तं -

आचार्यस्य प्रसादेन मम सर्वमभीप्सितम् ।
प्राप्नुयामीति विश्वासी यस्यास्ति स सुखी भवेत् ।। इति ।

अनेनप्रतिपादनेन शिष्यलक्षणमुक्तं ज्ञेयम् ।
परिशुद्धगुणोहितं विशुद्धाचारतत्परम् ।।

विरतं च महापापात्पितृदारादि पालकम् ।
शान्तं दान्तं ऋजुं सौम्यं प्रणतं भगवत्परम् ।।

प्रियवाक्यं महाबुद्धिं सत्वं (सत्)कुलपाणिकम् ।
संवत्सरं तदर्धं वा मासत्रयमथापि वा ।।

परिक्ष्यविविधोपायैः कृपया निःस्पृहो वदेत् ।

इत्यादिकं बह्वत्र द्रष्टव्यम् ।

न्यासविंशतौ च -

सद्बुद्धिस्साधुसेवी समुचितचरितस्तत्त्वबोधाभिलाषी
श्रुश्रूषस्त्यक्तमानः प्रणिपतनपरः प्रश्नकालप्रतीक्षः ।
शान्तोदान्तोऽनसूयुश्चरणमुपगतश्शास्त्रविश्वासशाली-
शिष्यःप्राप्तःपरीक्षां कृतविदभिमतस्तत्त्वतश्शिक्षणीयः ।। इति।

तथान्यत्र ऐहिकामुष्मिकं सर्वं ममाष्टाक्षरादौ गुरुराह ।

इत्येवं येनमन्यन्तैर्वक्तव्यास्तेमनीषिभिः ।

सदाचार्यस्सदाशिष्यः हितमाकाङ्क्ष्येन्मुदा ।
गुरोःप्रियं तु तत्कुर्यात्सच्छिष्यस्तु विवेकतः ।।

शिष्यस्य गुरुश्रुश्रूषा परमो धर्म ईरितः ।
गुरोर्वर्षरसदाध्यायेत्तध्यानं ब्रह्मगोचरः ।।

उपकुर्वन्नपि प्राज्ञो मुक्तपाणिमुपेयिवान् ।
रिक्तपाणिस्तुनोपेयाद्राजानं दैवतं गुरुम् ।। इति स्मर्यते ।

श्रोत्रियं श्रुतवेदान्तं हि रुचिभेदादब्रह्मनिष्ठा नोपगन्तव्यः । येनेति निर्देशो विज्ञानाभिप्रायः । शमो-बाह्येन्द्रियनियमनरूपः । प्रशान्त्येत्यन्तःकरण नियमनस्योक्ततया पारिशेष्यात् । एतेन श्रवणोपयुक्तमवधानं विवक्षितम् । न तु वासनोपयुक्तात्यन्तेन्द्रिय-जयादिः। तस्मै सविद्वान्प्रोवाचेत्यन्वयः ।

एवं गुरुपरम्परानुसन्धानं जीवात्मास्वरूपशोधनं तस्याविद्यातिरोधाने ततः प्रवृत्तिकार्यपरम्परात्ततोभगवत्कटाक्षलाभो तस्योत्तरोत्तराभिवृद्धिं तेनैव सदाचार्योपसत्तल्लक्षणं, तत्र वृत्तिप्रकारं तत्प्रसादेन रहस्यार्थ लाभञ्च प्रकाशमानः (परिच्छेदसनुं समापयति)

।। इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीमन्नारायणमुनेः कृतिषु अध्यात्मचिन्ताव्याख्याने अध्यात्मचिन्तामणौ प्रथमपरिच्छेदः ।।



## ।। अथ द्वितीयः परिच्छेदः ।।

**अर्थं रहस्यत्रितयगोचरं लब्धवानहम् ।**
**केवलं कृपया मां तु नयतस्तो प्रसादतः ।। ३१ ।।**

अथ रहस्यत्रयार्थं वक्तुमुपक्रम्यते अर्थमिति । तत्र प्रथमरहस्यं श्रीमदष्टाक्षरमन्त्रः सकलश्रुतिस्मृतीतिहासपुराणप्रसिद्ध नव्यार्थप्रतिपादको सकलफलप्रदश्च । "ओं नमो नारायणायेति" - मन्त्रोपासकः, सर्वफलानवाप्नोति, नारायणसायुज्यं गच्छति इति । अथ स्मृत्यादिषु बहुशः प्रतिपाद्यते -

ऋचोयजूँषिसमामानि तथैवाथर्वणानि च ।
सर्वमष्टाक्षरान्तस्थं यच्चान्यदपि वाङ्मयम् ।।

सर्वार्थावेदगर्भस्था वेदाश्चाष्टाक्षरस्थिताः ।
अष्टाक्षरस्तु प्रणवे अकारे प्रणवोस्थितः ।।

इहालौकिकमैश्वर्यं स्वर्गाद्यं पारलौकिकम् ।
कैवल्यं भगवन्तं च मन्त्रोऽयं साधयिष्यति ।।

स्वरूपं साधनं प्राप्य ददाति हि समञ्जसम् ।
सकदुच्चारणे नृणां चतुर्वर्गफलप्रदम् ।।

महापापञ्चातिपापं पापञ्चैवोपपातकम् ।
जपादस्य मुनेराशु प्रणश्यन्ति न संशयः ।।

अश्वमेधसहस्राणि वाजपेयशतानि च ।
सकृदष्टाक्षरं जप्त्वा लभते नात्र संशयः ।।

इत्यादिकं बहुद्रष्टव्यम् । अन्यवैभवपरं तथा ऋष्यादिकं च -

"अष्टाक्षरस्य मन्त्रस्य ऋषिर्नारायणस्मृतः" ।
छन्दश्च देवीगायत्री परमात्मा च देवता ।।

इति । तत्र वक्तव्यांशविशेषस्तु अस्मात्कृतेमन्त्रादिह सप्तमोऽध्याये द्रष्टव्यः । अत्रार्थप्रधानत्वात्तत्र चिन्ता प्रवर्तते, "अनान्ता-भगवन्मन्त्राः" इति श्रुतेः । आनन्त्यं च भगवदवतारानन्त्येन । ते च व्यापकाव्यापकभेदेन द्विविधाः । तत्राव्यापकेभ्यो व्यापकः श्रेष्ठः, पूर्णार्थवाचित्वात् । ते च जितन्ता प्रणवेऽष्टाक्षरद्वादशवर्ण, षड्वर्णरूपाः । यथा हयग्रीवसंहिता "पञ्चैते व्यापकामन्त्रा पञ्चै ते च प्रतिष्ठता" इति । नारायणगायत्र्यां त्रयाणामुपादानात्त्रयो व्यापका इति च वर्णयन्ति । तेभ्यो हि गरीयान्, श्रीमदष्टाक्षरमनुः गायत्र्या प्रथमोपात्तत्वात् द्वादश वर्णजीवप्रभावसिद्धत्वात् प्रतिपादनाच्च । पराङ्कुशपरकालादिभिरत्यादरेण सर्वत्र स्वप्रबन्धेषु प्रतिपादनात् पदत्रयात्मकश्चायम् । "ओमित्येकाक्षरं", "नम इति द्वे अक्षरे", "नारायणायेति पञ्चाक्षराणि" इति । अत्राक्षरसंख्यापदभेदो त्रायते । तत्र प्रणवोऽक्षार त्रयात्मकः । अकारोकारमकारभेदात् । तत्र अकारस्यार्थचतुष्टयमाह - **कारणमित्यादिना ।**

**कारणं रक्षकं श्रीशं शेषिणं त्वं विचिन्तयन् ।**
**त्वदर्थमितरेषां च शेषिणां विनिवर्तनात् ।। ३२ ।।**

"अकारो वै सर्वा वाक्" इत्यादिप्रमाणैस्सर्ववाचक कारणावस्थानं च । "एको ह वै नारायण आसीत्, न ब्रह्म, नेशानो, मे ध्यावापृथिवी नक्षत्राणि" इति । तथा भारते च -

पुरा तु प्रळये प्राप्ते नष्टे स्थावरजङ्गमे ।
ब्रह्मादिषु प्रलीनेषु नष्टे लोकचराचरे ।।

आभूतसंप्लवे प्राप्ते प्रळीने प्रकृतौ महान् ।
एकस्थिष्ठति विश्वात्मा स तु नारायणः परः ।।

इति । अयमेव सर्वोत्पादकः ।

तथा च श्रुतिः - अथ पुनरेव नारायणः, सोऽन्यं कामं मनसा ध्यायीत, तस्य ध्यानादस्य ललाटस्त्वधोपतत् । ता यमा आपः, तासु तेजो हिरण्मयमण्डमभवत् । तत्र ब्रह्मचतुर्मुखो जायते । अथ पुनरेव नारायणः, सोऽन्यं कामं मनसा ध्यायीत, तस्य ध्यानानन्दस्य ललाटे त्र्यक्षशूलपाणिः पुरुषो जायते, बिभ्रच्छ्रियं सत्यं ब्रह्मचर्यं तपांसि च वैराग्यं चेति । तथा ब्रह्माण्डे-

"रात्रिक्षये पुनः प्राप्तिः तस्याह्यमित तेजसः" ।
प्रसादौ प्रादुरभूत्पद्मं पद्मनिभेक्षणः ।।

ततः ब्रह्म समभवत्तस्यैवं संप्रसादजः ।
अह्नक्षये ललाटश्च ततो देवः स वै द्विज ।।।

क्रोधाविष्टः ससंजज्ञं रुद्रः संहारकारकः ।

इति । सर्वेषां भगवत एवोत्पत्तिप्रळयश्रवणात्, स एव कारणमिति निश्चीयते । ननु -

यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परस्समहेश्वरः ।।

इति । प्रणवप्रकृतिरूपस्य अकारस्य वाच्यतया प्रधानस्य परमेश्वरस्य प्रतिपादनादकारोभगवद्वाचक इति चेत्, नः महेश्वर-शब्दस्य महाञ्चासौ ईश्वरस्येति भगवत्परत्वात् । अकारो विष्णुवाचकः 'अ' इति भगवतो नारायणस्य प्रथमाभिधानमभिदधता किं नाम मङ्गलं न कृतं ? इत्यादिषु भगवद्वाचकत्वनिर्णयाच्च ।

श्रितायाञ्च सर्वलोकमहेश्वरमिति प्राह साधारणश्च शिववाचक शब्दा बहूशो दृश्यन्ते । तथा सौवर्णोपनिषदि सान्तकरस्सरुद्रः प्राणभृत्सप्राणनाशकः स यशो हरिः । यद्यनन्तोऽयं विष्णुर्यः इति उपबृंहितं चैतत् । ब्रह्माण्डे -

रुजं द्रावभृते यस्माद्रुद्रस्तस्माज्जनार्दनः ।
ईशनादेव ईशानो महादेवो महत्त्वतः ।।

विशन्ति येनवानाकं मुक्तास्संसारसागरात् ।
फलाधौरेयता विष्णुः पिनाकीति च विश्रुतः ।।

शिवस्सुखात्मकास्ते वैस्सर्वसंरोधनाद्धरिः ।
कृत्यार्थमिदं देहं यतोवस्तेप्रवर्तयन् ।।

कृत्तिवासास्ततो देवो विरिञ्चिश्च विवेचनात् ।
ब्रह्मणा ब्रह्मनामासौ एश्वर्यादिन्द्र उच्यते ।।

एवं नानाविधैश्शब्दैरेक एव त्रिविक्रमः ।
वेदेषु च पुराणेषु गीयते स पुरुषोत्तमः ।। इति ।

नचैवम्, नारायणादि शब्दानामन्यत्र प्रयोगः ।

यथा वामने - न तु -

नारायणादि शब्दानां नाम्नामन्यत्र संभवः ।
अन्यनामाङ्कितो विष्णुरेक एव त्रिविक्रमः ।। इति ।

अत्र वक्तव्यशेषास्तु पुरुषार्थसुधानिध्यादिषु द्रष्टव्यम् । "अवरक्षणे" इत्यस्माद्धातोः जातोऽयम(व?)कारो(र?) निरुपपदत्वात्सर्वरक्षकं परमात्मानमाह ।

रक्षकः सर्वलोकानां त्वमेव पुरुषोत्तम ! ।
नहि पालनसामर्थ्यं भूते सर्वेश्वरं हरिम् ।।

इत्यादिषु **सर्वरक्षकत्वं** सिद्धम् । **रक्षा च** - सर्वदेश, सर्वकाल, सर्वावस्थासु, सर्वप्रकारेण क्रियमाणा विवक्षिता । **श्रीशं** - श्रियःपतेरेव रक्षकत्वात्तत्संबन्धोऽत्रानुसन्धीयते ।
यथा -

"लक्ष्म्या सह हृषीकेशो देव्याकारुण्यरूपया ।
रक्षकस्सर्वसिद्धान्ते (वेदान्तेऽ)पिच गीयते ।।

इति । न चैतावता श्रियाप्युपायत्वं मामेकं तमेवेत्यादि विरोधात् । किन्तु पुरुषकारभूत रक्षणमुपोद्बलयति । किञ्च - शेषत्व प्रतिसंबन्धित्वाच्च तत्संबन्धानुसन्धानमुचितमेव । अस्मिन् नकारेम्लुप्तचतुर्थीतादर्थ्यमुच्यते इति । तत्प्रतिबन्धिनश्शेषत्वं चात्रसिद्धम् । सचात्रकथं चतुर्थीति वाच्यम् । मन्त्रशेषनारायण-रूपानुष्ठेयार्थप्रकाशनस्य अवश्यं भावाच्च उक्तावगतिः । एवं रीत्या चतुर्विधं चिन्तयन्, उकारोपधारणवाचकः तदेवाग्निस्तद्वायुस्तत् सूर्यस्तप्रयोगादनेन देवतान्तरमातापित्रादि शेषत्वं निषिध्यते । न च 'मातृदेवो भवेत्यादि' विरोधः । औपादिक शेषत्व निबन्धनत्वात्तादृश वचनानाम् । अत एव स्मर्यते -

देवर्षिभूतात्मनृणां पितृणां
न किङ्करो नायमृणे च राजन् ।
सर्वात्मना यः शरणं शरण्यं
नारायणं लोकगुरुं प्रपन्नः ।। इति ।।

केचित्-उकारेणोच्यतेलक्ष्मी इति उकारस्य लक्ष्मीवाचकत्वमाहुः । तदास्य शेषत्वनिवृत्तिररर्थाद्भवति । अन्यशेषत्वस्यातदहितकर-त्वेनावश्यं परिहरणीयत्वादाक्षेपप्राप्ते, आभिधानिकस्यैव ग्राह्यत्वाच्च पूर्वपक्ष एव ज्यायान् ।

**अनन्यार्हं स्वतोनित्यं प्रकृत्यात्मविलक्षणम् ।**
**पञ्चविंशश्चिदानन्द स्वरूपगुणसंयुतम् ।। ३३ ।।**

तदाह - **त्वदर्थमितरेषां च शेषिणां विनिवर्तनात् स्वतोनन्यार्हमिति** । मकारार्थमाह - नित्यं - प्रकृत्येत्यादिना । सा पञ्चविंशं-ककारादि मकारान्तः, चतुर्विंशतितत्वानि **गुणम्** । यद्वा-मकारेण जीवप्रतिपादनादत्रापि मकारपञ्चविंशकं जीवमाहुः । तथा च श्रुतिः "पञ्चविंशक आत्मा" भवति । **चिदानन्दस्वरूपं** ज्ञानानन्दगुणकं चेत्यर्थः ।

**अहमर्थमणुं नित्यमात्मवर्गं निरूप्य च ।**
**तं च स्वानर्हतासिद्धेरहन्ता ममतोज्झितम् ।। ३४ ।।**

**अहमर्थ** - अहंबुद्धिर्बोध्यं, **अणुं**-अणुपरिमाणं, **नित्यं**-सर्वदा विद्यमानं, तत्र यथोचितं "मार्जने", "मनःपरिमाणे", "मनु अनु अवबोधने" इत्यादिकमनुसन्धेयम् । **आत्मवर्गामित्यनेन** नात्रोक्त-मेकवचनं जात्यभिप्रायेणेत्यवगम्यते । जीव बहुत्वं च बहुप्रमाण-सिद्धम् । अनेन सर्वेऽप्यात्मनो भगवतः शेषभूता इत्युक्तं स्यात् । इदं च भगवद्दास्यं स्वाभाविकं -

दासभूताःस्वतस्सर्वेह्यात्मनः परमात्मनः ।
अतोऽहमपि ते दासः इति मत्वा नमाम्यहम् ।। इति ।

मन्त्रराजपदस्तोत्रे महादेवेन प्रतिपादितत्वात्तथाविधि वैष्णवलक्षणं उक्तवान् ।

ऊर्ध्वपुण्ड्रविशुद्धाङ्गाः प्रणमन्तश्च सर्वदा ।
पद्माक्षमालास्सततं दधाना सितवाससः ।।

अङ्किता चैव चक्रेण देवदेवस्य चक्रिणः ।
वेदाभ्यासरता नित्यं नित्यकर्मपरायणाः ।।

दासा वयमिति ब्रह्ममानिनो लोकवर्जिता ।

इति । तथा श्रीवामनीये -

ये नमस्यन्ति सततं नारायणमनामयम् ।
तेषां दासस्य दासोऽहं पुनर्जन्मनि जन्मनि ।। इति ।

जन्मान्तर सहस्रेषु यस्यास्याद्बुद्धिरीदृशी ।
दासोऽहं विष्णुभक्तानां इति सर्वार्थसाधकः ।।

इति ननु शेषभूतं जीवं निरूपयित्वा पश्चाच्छेषत्वं वक्तव्यम् । किमत्र व्यत्यास इति चेत्, उच्यते । ज्ञानादिभ्यो विशेषत्वस्यैव अन्तरङ्ग(मि)ति निरूपकत्वात् स्वरूप निरूपकधर्मप्रतिपादन ध्वारा धर्मनिरूपणोपपत्तेः। शेषत्वाभावे आत्मनोऽनुपादेयत्वाच्चेति । यथोक्तं यामुनाचार्यैः -

"न देहं न प्राणान्नच सुखमशेषाभिलषितुं
न चात्मानं नान्यत्किमपि तवशेषत्वविभवात् ।
बहिर्भूतं नाथ क्षणमपि सहे यातुशतधा
विनाशं तत्सत्यं मधुमथनविज्ञापनमिदम् ।।

अथ नमःशब्दार्थमाह - **तञ्चेति नमः** । नमे(त्यने)न ममाहं शेषभूतः कश्चनार्थोऽस्ति (इति) सिद्धार्थ उच्यते । अस्य शेषत्वस्य पूर्वं विवृतत्वात् स्वस्याप्यन्यत्वाविशेषादत्र पारतन्त्र्यमेव निरूप्यत इत्यभिप्रायेणाह - **स्वरक्षणेऽप्यस्वातन्त्र्यमिति** । तञ्चेत्यनेन पूर्वसिद्धान्वयेनानुपादौ पातयिष्यति । यद्वा तस्य

शेषत्वेनिषिद्धेऽपि स्वशेषत्वं स्वस्यनिषिद्धं इति भ्रान्तिः । भ्रान्तिवारणाय एवं वादः स्वातन्त्र्य निवृत्या फलितमाह **त्वदिति** । भगवदेकरक्ष्यत्वेन स एव सिद्धोपाय इति अनन्यशरणत्वं सिद्धमित्यभिप्रायेणाह **विज्ञायेति** । यद्वा शरणागति वाचकोऽयं नमः शब्दः । "गच्छत्वमेनं शरणं शरणं पुरुषर्षभ" इत्युद्धिष्टे "द्रौपत्या साहितास्सर्वे नमश्चक्रं जनार्दनं" इति प्रतिविधान दर्शनात् । यद्वा "वन्दनाकारमुद्दिष्टा मन्त्रप्रधानमुदीर्यते" इत्यादिवचनानुसरेण नमःशब्दो भगवन्तं सिद्धोपायमाह इदञ्चार्थद्वयमत्र नमःशब्दार्थ विवरणेऽनुसन्धेयम् । अथ नारायणपदार्थमाह **नित्येति** ।

**नित्यनिस्सीमनिस्संख्यविभूतीनामुपाश्रयम् ।**
**तदन्तर्यामिणं देवं नाथं नारायणं प्रति ।। ३६ ।।**

"नारायणमयनं यस्य नारायणः" । "नारा अयनं यस्य स नारायण" इति समासद्वय सिद्धार्थमाह-क्रमेण नित्येत्यादिपदेन । नारशब्दार्थं तद्बहुत्वञ्चोच्यते । नार शब्देन क्षयरहितवस्तु प्रतिपाद्यत इत्यभिप्रायेण नित्यविशेषणमुक्तम् । ज्ञानानन्दामल-त्वादयःज्ञानादिगुणाः दिव्यविग्रह दिव्यायुधभूषणानि लक्ष्म्यादि स्वमहिष्यः, छत्रचामरादि परिच्छेदाः, नित्यमुक्तानन्तादयः, परमपदप्रकृतपुरुषकालविभूतित्वेनोच्यते । तदन्तर्यामिणमिति बहुव्रीह्यर्थः । एतद्बृहद्धारीतेनानुसंहितं -

---

1. अस्यां मातृकायां 36 to 39 संख्याङ्किता श्लोकाः न सन्ति । अतः मातृकान्तरणात्र संयोजितं भवति ।

Ref. (Kannada Script) Mss. PM. 729 - Adyar Library, Madras
Xerox Vol. No. 155 - TMSSM Library.

क्षयेरकाररसंप्रोक्तो न कारस्तन्निरोधकः ।
तस्मात्तु नरयत्यत्र नित्यत्वेनोच्चे नरः ।।

नारा इति समाहृत्य बाहुल्यत्वाज्जनस्य च ।
तेऽपान्त्त्वयनं वासस्तेन नारायणस्मृतः ।।

मातापिता सखाभ्राता निवासश्च सुहृद् गतिः ।
योऽसौ श्रियः श्रीपरमस्तेन नारायणस्मृतः ।। इति ।

अनेनसमासद्वयेवनान्तर्यामित्वमुपायत्वमुपेयित्वं च सिद्धम् । चतुर्थ्यर्थमाह - नित्यमिति ।

**नित्यं सर्वत्र निखिलावस्थं निरवशेषतः ।**
**प्रीतिकारिता कैङ्कर्यनिरतश्चिन्तयाम्यहम् ।। ३७ ।।**

**नित्यं**-सर्वदाक्रियमाणस्य **कैङ्कर्यस्य**-कालान्तरेऽपि विच्छेदाभावो द्योत्यते । **सर्वत्रेत्यनेन** - देश परिच्छेदराहित्यं, **निखिलावस्थां**-येन येन धप्तुर्गच्छति तेन तेन सह गच्छतीति न्यायेन अवतारदशास्वपि **निरवशेषतः** - निवासशय्यासन पादुकांशुकोपधानादि सर्वविध कैङ्कर्यं च विवक्षितम् । तत्र स्वकर्तृत्वराहित्य विवक्षया प्रहर्षयिष्यामि इति न्यायेन भगवन्मुख विकासफलत्वमभिप्रेत्य **प्रीतिकारिता** इत्युक्तम् । इदञ्च मन्त्रार्थानुसन्धानं सर्वार्थसाधारणमिति स्वानुसन्धानप्रकारं एतन्मन्त्रस्य वाक्यार्थमाह इत्थमित्यादिना ।

**इत्थं चेतनसामान्यरूपान्तर्भावतः स्वतः ।**
**स्वात्मनोऽप्यनुसन्धानं तथैव विदधाम्यहम् ।। ३८ ।।**

**अकारार्थार्थभूतोऽहं अनन्यार्होचितः परः ।**
**स्वार्थता रहितो नित्यमनन्यशरणस्तथा ।। ३९ ।।**

**नारायणाय नाथाय किङ्करस्याशिरन्तरम् ।**
**इति मन्त्रं स्वयाथात्म्य परमेवानुसन्धते ।। ४० ।।**

केचित् पदत्रयं वाक्यत्रयं च कृत्वा स्वरूपसाधन पुरुषार्थरूपमाहूः।

आचार्यश्चाहुः -

अकारार्थयैव स्वमहामन्दमत्यां न निवहो-
नराणां नित्यानामयनमितिनारायणपदम् ।
यमाहोऽस्मै कालं सकलमथ सर्वत्र सकला
स्ववस्था स्वाविस्युर्मम सहजकैङ्कर्य विधयः ।। इति ।

[ मूलमन्त्रप्रकरणं समाप्तभ् ]

एवं मूलमन्त्रार्थमनुसन्धाय द्वितीय रहस्यार्थ वक्तुं भूमिकामाह एवं प्रकाशितेति ।

**एवं प्रकाशितस्स्वात्स याथात्मस्वोचितामहम् ।**
**वृत्तिं प्रपत्तिं निश्चित्य विदधामि द्वयेन ताम् ।। ४१**

इदञ्च द्वयं श्रुतिस्मृतीतिहासश्रीपाञ्चरात्रादिषु सारतया प्रतिपादितं पराङ्कुशनाथमुनियामुनयतिवरादीनामत्यन्ताभिमतं च । अनन्यार्ह-शेषभूतात्यन्तरस्वरूपानुरूपं परमसाध्यसाधनप्रतिपादकत्वात् द्वयमिति नाम्ना प्रसिद्धं मन्त्ररत्नं च । श्रीमदष्टाक्षरमन्त्र स्वस्वरूपप्रकाशने जातेतदनुगुणवृत्तिं शरणागतिं निश्चित्य तां शरणागतिमन्त्रेण द्वयेनविदधामि । अनेन प्रपत्ति प्रकाशक-मन्त्रान्तर सद्भावेऽपि अनेनैव सा कर्तव्येति गम्यते ।

उक्तं हि -

नहि द्वयेन सदृशं वेदे लोके च दृश्यते ।
तस्मात्तेनैव शरणं प्रपद्येत रमापतिम् ।। इति ।

इदञ्च वाक्यद्वयात्मकम् । तत्र पूर्ववाक्यं पदत्रयात्मकम्, तथोत्तर वाक्यं च तत्र प्रथमपदेन पुरुषकारभूतया श्रिया नित्ययोगाश्रयणीयस्य भगवतो गुणविग्रहयोगश्चोच्यते । तत्र श्रीशब्दार्थमाह - त्वामित्यादिना ।

**त्वां श्रितां निखिलैस्सेव्यां श्रियं घटकभावतः ।**
**समाश्रित्य तथानित्यं युक्तं वात्सल्यसागरम् ।। ४२ ।।**

**त्वांश्रितामिति** श्रयत इति व्युत्पत्तिसिद्धोऽर्थः उक्तः । निखिलैस्सेव्यामिति-श्रीयते इति श्रीरित्यर्थः । घटकभावतः समाश्रित्येत्यनेन-श्रियः पुरुषकारत्वमेव नोपायत्वेनान्वय इति गम्यते । अस्याः पुरुषकारत्वेऽपि उभयसंबन्धो विद्यते । चेतनैस्सहमातृत्वसम्बन्धं, ईश्वरेण महिषित्वसंबन्धश्चेति ।

यथोक्तम् - अस्येशाना जगतो विष्णुपत्नी "त्वं माता सर्वलोकानां देवदेवो हरिः पिता" इति । यद्वा श्रृणोति, श्रावयन्तीति वा श्रुतिः । अयमर्थः भगवन्तमाश्रयितुमुद्युक्त चेतनस्थापराधपरम्परामीश्वरस्य स्वातन्त्र्यं च स्मृत्यादिभिस्तत्परिहाराय श्रियः कारुण्यादि कल्याणगुणयोगं च तत्सम्बन्ध विशेषञ्चालोच्यते । स्वामिन् ! अशरण्यशरण्यस्तव पादारविन्दयुगलं विना ममगतिर्नास्तीति विज्ञापयति । तद्विज्ञापनं श्रृणोति तथैव । भगवन्तं श्रावयति - भगवन् ! सर्वज्ञ ! अपारकारुण्यैक जलनिधे ! किमेतत्त्वया चिन्तितं निर्दोषः क इत्याद्युचितालापादि

दिव्यचेष्टितैर्भगवन्तं सम्मुखीकृत्य एनमात्मानं कृतार्थयतीति । तथोक्तमाचार्यैः -

पितेवत्वत्पेयान्जननि परिपूर्णोऽसि जनने
हितरस्तोतोवृत्या भवति च कदाचित्कलुषधीः ।

किमेतन्निर्दोषक इहजगतित्वमुचितै
रुपायैर्विस्मार्य स्वजनयसि माता तदसि नः ।।

इति चेतनस्योभयत्र संबन्धे समानेऽपि मातृत्वप्रयुक्त वात्सल्याति-रेकिण्यैवचालिङ्गित कण्ठेन भगवद्वैभवतयापरिमितापराध दश-कण्ठहितप्रवृत्ततया आर्द्रापराधरक्षसि जनाभिधानाद्योजयामास । ज्ञानशक्त्यादि प्रसिद्धगुणवत्तया च भगवत्समाश्रयणे पुरुषकारत्वेना वश्यं समाश्रयणीय । **नित्ययुक्तमित्यनेन** मदुबर्थो उक्तः । अनेन-नित्ययोगेन भगवत्समाश्रयणस्य पुरुषकारभावयाप्रयुक्त विरतिनिवार्यते । रुचिसद्भावेकालनियमो नास्तीति तात्पर्यम् । अथ नारायण पदार्थमाह वात्सल्यसागरमित्यादिना । यद्यपि उभयविभूतिमत्वं तदर्थं तथाप्यत्र समाश्रयप्रकरणत्वात्तदुपयुक्तमु-पादानं वात्सल्यं दोषभोग्यत्वं, दोषादर्शनत्वं वा यदाहुः श्रीवत्साङ्कमिश्राः

"यतो दोषं भक्तिष्विह वरद नैवाकलय" इति ।

यथा धेनुर्वत्सदौत्ये दोषमनाकलय्य क्षीरेणोपलाशयति तथैव ईश्वरः दोषो यद्यपि स्यात्सतामेतदर्हितमिति । "अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम" इति प्रक्रियया च रक्षतीतिभावः ।

**स्वामिनं शीलजलधिं सुलभं सुगमं तथा ।**
**सर्वज्ञं शक्तिसम्पन्नावाप्तकामाञ्च शेषिणम् ।। ४३ ।।**

**स्वामित्वं** नाम चेतनस्य वैमुख्येति । अपरित्याग पुरस्सर-रक्षण निदानं सम्बन्धविशेषः । एतद्वैभवाद्धि अद्वेषमारभ्य कैङ्कर्य-पर्यन्त स्वभावजनकत्वम् । **शीलं नाम** महते मन्त्रैस्सह नीरन्ध्रेण संश्लेषः । अजेन भगवतो महत्त्वमालोच्याल्पस्याश्रयणविरति-र्व्यावर्त्यते । **सौलभ्यं नाम** प्रकृत चक्षुरगोचरस्य स्वस्य समाश्रयणीयत्वाय सकलजनमनोनयनविषयाकारः । अत एव सुगमत्वम् । सौलभ्यपराकाष्ठा च अर्चावतारसौलभ्यं परत्वकोटौ निक्षिपति । तत्तु आज्ञानस्यैव । इदं तु त्वं मे मास्त्विति वादिनमप्यङ्गीकुर्वन् रूपं सर्वकालवस्थितं च । इदञ्चोपयुक्तं गुणजातं तदाश्रितकार्यकरगुणजातमाह **सर्वज्ञमिति**। त्रिकालवस्तु साक्षात्कारित्वं सर्वज्ञत्वम् । अघटितघटनासामर्थ्यं **शक्तिः** । **आप्तकाममिति** पूर्तिरुच्यते । शेषकालातिशयाधारत्वं **शेषित्वम्** ।

**कारणं करुणापूर्णमशेष फलदायिनम् ।**

**त्वां विनिश्चित्य कल्याणनित्यमङ्गलरूपिणम् ।। ४४**

**कारणं**-सकलजगदुद्भवस्थितिप्रलयहेतुभूतं, करुणापूर्णत्वं निर्हेतुकसहजहार्दकृपापरिपूर्णत्वम् । पूर्णमित्यनेन पूर्वोक्तगुणानां एकदेशावस्थितत्त्वम् । कृपातत्वकल्पितं भगवद्रूपमितिवत् द्योत्यते। **अशेषफलानि**-धर्मार्थकाममोक्षाः, तान् प्रददाति । अनेन प्रपत्ते-र्मोक्षैकनियतत्वं नास्ति । तत्तदभिसन्ध्यानुगुण्यंन सर्वफल-प्रदत्वमेवेति ज्ञायते । उत्तरत्र चरणप्रयोगादत्र दिव्यमङ्गलविग्रह योगोऽप्यनुसन्धेयमित्याह **त्वामिति** ।

**चरणौ तव सर्वात्मसाधारणशुभाश्रयौ ।**

**अनिष्टविनिवृत्यर्थमिष्टप्राप्त्यर्थमेव च ।। ४५ ।।**

**उपायाभावाच्चरणं प्रपद्येऽध्यवसायवान् ।**

**इयं प्रपत्तिर्विश्वासपूर्वक प्रार्थना मतिः ।। ४६ ।।**

**विनिश्चित्य तवचरणौ** ईदृशां सर्वेषामात्मनां साधारण्येन शुभाश्रयभूते भगवदनन्यार्हशेषत्वज्ञानवदुचितविषयरुचिजनकौ प्राप्यौ शरदम्भोजसदृशौ च। अथ शरणशब्दार्थमाह **अनिष्टेति** । **उपाय**वाचकः शरणशब्दः । उपाययोग्याहारक्षेत्रशब्दः शरणमित्ययं वर्तते । सांप्रतञ्चैष उपायार्थैकवाचक इति वचनात् । अर्थादुपायान्तर व्यावृत्तिश्च । अथ चरणपदोपादानां कुर्वन् तदर्थञ्चाह **प्रपद्येऽव्यवसायवानिति**। "पद् लृगतौ" इत्यस्माद्धातोः निष्पन्नोऽयं शब्दः, गत्यर्थ बुध्यर्थाविति बुद्धिविशेषवाचकः इत्यर्थः । यथोक्तम् -

> अनन्यसाध्वी स्वाभीष्टो महाविश्वासपूर्वकम् ।
> तदेकोपायतायाञ्च प्रपत्तिः शरणागतिः ।। इति केचित्

आचार्याः -

> आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् ।
> रक्षिष्यतीति विश्वासः गोप्तृत्व वरणं तथा ।।
> आत्मनिक्षेपकार्पण्यं षड्विधाः शरणागतिः ।

इत्यादि वचनजातमालोच्य आत्मनिक्षेपस्यैवाङ्गिकत्वं इतरेषाञ्चाङ्गत्वं वर्णयन्ति । एतत्सर्वमस्मत्कृतेतन्त्रसारेरहस्यादीपे च सोपपत्तिकमनुसन्धेयम् । तत्र वर्तमाननिर्देशः कालक्षेपार्थं भोगार्थं ईश्वरप्रीत्यर्थं यावच्छरीरपातमनुसन्धेयमिति द्योतनार्थं, न तु साधनपूर्त्यै । सकृत्कृतस्यैव फलसाधनत्वात् । यथोक्तम् -

> "सकृदेव हि शास्त्रार्थः कृतोऽयं तारयेन्नरम्" ।
> सकृदेव प्रपन्नाय तवास्मीति च याचते ।
> अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ।। इति ।।

इयं प्रपत्तिः कारणत्रयसंपत्ति युक्ता वियुक्ता वा कार्यकरा भवति ।

बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम्

इत्यादि वचनात् । ननु प्रपत्तेरप्युपायभूतैः सिद्धोपायत्वं भज्यत इत्यत्राह तस्मादिति ।

**तस्मान्ममाभिमुख्यार्थं प्रपत्तिरियमित्यतः ।**
**त्वमेवोपायभूतस्सन् मां पाहि ! करुणाकर ! ॥ ४७ ॥**

तस्मात्-विश्वासपूर्वकप्रार्थनामितिरूपत्वात् । ममाभिमुख्यार्थप्रपत्तिः-भगवदाभिमुख्यद्योतक प्रपत्तिरूपायाः अस्याः प्रपत्तेरसाधनतयान्वय इति भावः । नहि उपायप्रार्थनमुपायकोटि निविष्टं भवति । उक्तं हि अयं बुद्धिविशेषोऽनन्यार्हशेषत्वज्ञानकार्यभूतः, इतरोपाय व्यावृत्तिश्च । तद्वदनुष्टेयव्यभिचारविलम्बशून्यः सर्वविषये नियमरहितोऽन्तिमस्मृतिनिरपेक्षः सुशको यच्च गर्भोदृढाध्यावस्थाय रूपश्चेति । तत्र महाविश्वास प्रधानतया सम्पादनीयः । अत एव **प्रपत्तिर्विश्वास** इत्युक्तम् । तेन युक्त्याभास, वचनाभासैरीश्वर परीक्षया चास्याध्यवसायस्य मान्द्यं निवर्त्यते । अविलम्बेन फलं च सिध्यति । अत्र विश्वासप्रतिबन्धिचिन्तनव्यावृत्तिश्चार्यानु-सन्धानेन सिध्यति । यथोक्तं वेदान्ताचार्यैः -

कर्तव्यं सहृदेव हन्त ! कलुषं सर्वं ततो नश्यति-
ब्रह्मेशादि सुदुर्लभं पदमपि प्राप्यं मयाद्रागिति ।
विश्वासं प्रतिबन्धचिन्तनमिदं पर्यस्यति न्यस्यतां
रङ्गाधीश ! परं पतित्वसुभगं नारायण त्वं तव ॥

इति । तस्मादेतत्सर्वं साधनकोटिष्वनारोप्यसिद्धसाधनभूतस्सन् स्वयमेव परमकृपया मां पालयेति विज्ञापयति त्वमेवेति ।

सर्वातिशयताकार स्वरूपगुणसंपदा ।
श्रियानित्यं सहासीनं देवदेवं जगत्पतिम् ।। ४८ ।।

अथोत्तरखण्डार्थमाह सर्वेत्यादिना । लक्ष्म्यास्तु एको न सर्वशेषित्वात् । आकारेण-दिव्यमङ्गल विग्रहेण स्वरूप (गुणसंपदा)-दिव्यात्मरूपेण कल्याणगुणगणैश्च स्वेतरसमस्त वस्त्वतिशयतत्त्वेन **सर्वातिशयतत्त्वोक्तिः** । **श्रियानित्यं सहासीनमित्यनेन** श्रीमच्छब्दार्थः उक्तः । सहासीनमित्यनेन श्रियः स्वानुरूपत्वं द्योत्यते । "नित्यनिरवध्यानुरूपगुणविभवैश्वर्यशीलाद्यनतिकातिशयासंख्येयकल्याणगुणगणश्रीवल्लभ !" इति हि भाष्यकारेणैवोक्तम् । **देवदेवमित्यादिना** नारायणशब्दार्थः ।

भवन्तमनुभूयाहमाह्लादपरिबृम्हितः ।
नित्यं सार्वत्रिकं सर्वावस्थं सर्वविधं तथा ।। ४९ ।।

भवन्तमनुभूय कैङ्कर्यवर्तकातिसरसानुभाव्यगुणविग्रह विभूति विशिष्टं भवन्तमनुभूयेत्यर्थः । एवं विधानुभावेन महान् **आह्लादो** भवतीति परिबृम्हितः । सर्वदेशसर्वकालसर्वावस्थाप्यनुस्यूतं सर्वविधं सर्वभोगविलक्षणं कैङ्कर्यं मे स्यादिति नारायणपदस्थं चतुर्थीमनुसन्धत्ते **नित्यमित्यादिना** ।

ऐश्वर्यकैवल्योत्तीर्णं त्वदानन्दाद्विलक्षणम् ।
लक्ष्मीभोगाद्विशिष्टं च कैङ्कर्यसुखमाप्नुयात् [1] ।। ५०

ऐश्वर्यादीनां नश्वरत्वं, नास्य तदुत्तीर्णत्वं । यद्यपि **कैवल्य** नित्यत्वमस्ति तदपि भगवदनुभवापेक्षया सागरद्रव्यवदत्यल्पत्वम् ।

---

A 1- माप्नुयाम् ।

उक्तं च श्रीवत्साङ्कमिश्रैः -

भोगा इमे विधिशिवादि पदं च किञ्चित्
स्वात्मानुभूतिरिति या किल मुक्तिरुक्ता ।

सर्वं तदुषजलजोषमहं जुषेय
हस्त्यद्रिनाथ ! तवदास्यमहारसज्ञः ।।

इति अस्य कैङ्कर्यस्य मिथुनविषयत्वाल्लक्ष्मी भोगाद्विलक्षणमुपपद्यते । अथ नमश्शब्दार्थमाह तच्चेति ।

**तच्चस्वार्थत्वसंभूतमहन्ता ममतात्मकम् ।**
**प्रतिबन्धमशेषेण विनिवर्तय माधव ।। ५१ ।।**

**इदं द्वयार्थं सञ्चिन्त्य पूर्णप्रपदनात्मकम् ।**
**तत्र त्वदात्मकार्पण्यं जानेश्लोकविधानतः ।। ५२ ।।**

अस्मत्कैङ्कर्यसाम्राज्यनिरतिशयभोग्यभगवद्विषयकरणान्निरस्त-समस्तप्रतिबन्धकस्य, अत्यन्तपारतन्त्रयस्य, स्वरूपप्रयुक्तेन स्वप्रयोजनस्य, बुद्धिर्नानुवर्तेत इतीममुपशमयतुमेवं वादः । भगवन्मुखविकास हेतुत्वादिदमादरणीयमिति प्रतीपमन्तरेण भोक्तृत्वप्रतिपत्तिर्वर्तते । इदं कैङ्कर्यपुरुषार्थायैव भवतीति भावः । अथ चरमश्लोकार्थं वक्तुं पूर्वेण सङ्गतिमाह इत्थमिति । द्वयार्थं इत्थं सञ्चिन्त्य पुरुषकारस्वरूपमुपायपरिग्रहं कैङ्कर्यप्रति-संबन्धिनं तत्र वृत्तिं तद्विरोधि निवृत्तिं च सञ्चिन्त्येदित्यर्थः । साधन एव तात्पर्यमित्यभिप्रायेणाह **पूर्णप्रपदनात्मकमिति** । तत्र प्रपत्तौ आदरातिशयं अवगच्छामि । कुत एतदवगतमित्यत्राह **श्लोकविधानेत्यादिना** । यतः मोक्षसाधनवत्तया बहून्धर्मान् प्रतिपाद्यसर्वोत्तमत्वेन चरमश्लोके प्रपत्तेरेव मोक्षसाधनत्वं त्वया

विहितमिति तत्रैव तव तात्पर्यमस्ति इति पामरमतीनामप्यवगम्यत इत्यर्थः । अथ चरमश्लोकार्थमाह - अभीष्टेति ।

**अभीष्टोपायरूपेण साध्यानाञ्चिरकालतः ।**
**स्वकर्मज्ञानभक्तीनां स्वरूपपरिशोधनात् ।। ५३**

निखिलशास्त्रतात्पर्यभूतश्रीमदष्टाक्षरमन्त्ररत्नप्रतिपुरुषार्थनु - सन्धानविशेषस्सप्रकारेऽस्मिन् श्लोके प्रतिपाद्यते । देहात्मभ्रमेण बम्भ्रम्यमाणस्य पार्थस्य मोक्षरुचिविरोधशेषप्रतिबन्धभूतं दिव्य-कटाक्षामृत कल्पालापविशेषैकमयत्वात्, उत्तरोत्तरनिःश्रेयसाभिरुचिं जनयित्वा भगवान्वासुदेवः कर्मज्ञानभक्तियोगान् सविस्तारं प्रतिपादयामास । पार्थस्तु स्वदुर्गतिं, स्वस्वविरोधिनिवर्तक-सामर्थ्याभावं विहितोपायानुष्ठानाशक्तिञ्चालोच्यान्तरभि(मुख)स्सन् शोचते स्म । तदालोच्य भगवान् पूर्वोक्तसकलसाधनजातं सवासनं विहाय मामेव निरपेक्षसाधनं व्रज । अहं सर्वविरोधिनिवृत्तिं करवाणि । त्वं शोकं माकृधः इति पार्थस्य शोकं निवारयामास । नच शास्त्रान्तराणां पूर्वोक्तवचनानां च विरोधः । सर्वत्र इतर धर्मत्यागपूर्वकमेव भगवत्प्रपत्तिविधानात् । एतच्च श्रीगीताभाष्या-विरोधिनास्माभिः प्रतिपादितमन्यत्र । तत्र पूर्वार्धेन अधिकारिकृत्यं, उत्तरार्धेनेश्वरकृत्यञ्चोच्यते। अथोपदेशो व्याश्यास्यन्ति अभीष्टेति। अभीष्टशब्देनात्र मोक्ष उच्यते । मोक्षप्रकरणत्वादादावेव फलान्तर निषेधाच्च ।

"चिरकालतस्साध्यानां नैकदेश्यादि जन्मतः ।

अनेकजन्मसंसिद्धिः . . . . . . . . . . .

जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिरिति ह्युक्तम् । एवं विधाः के इत्यात्राह - स्वकर्मेति । कर्मयोगज्ञानयोगभक्तियोगः 'सर्व'शब्देन तद्योग्यतापादकाः विवक्षिताः । यद्यपि साङ्गमेव साधनं तथापि

पृथगुक्तिः, प्रपत्तेः वेनापिप्रकारेण कर्मान्वयो नास्तीति धोतनार्थमेवं प्रथमपदार्थः उक्तः । तेषां त्याज्यत्वे हेतूनाह स्वरूपपरिशोधनादि-त्यादिना । कर्मयोगादनुष्ठेयमपि तदुत्पत्तिप्रतिबन्धकनिवारकत्वं, स्वार्पणबुध्यानुष्ठाने कार्यकरत्वं स्वस्यैव । तत्रापि फलप्रदत्व-मित्यादि विचारे भगवतएवानुस्यूतिरिति तत्परित्याग-सिद्धसाधनपरिग्रह एव ज्यायान् ।

**स्वविलम्बाक्षमत्वेन स्वाकिञ्चन्य [A1] विधानतः ।**
**स्वानुरूपत्व [A2] निष्कर्षात्सर्वं सन्त्यज्यदूरतः ।। ५४ ।।**

किञ्च - **स्वविळम्बाक्षमत्वेन** फलस्वारस्य दर्शने विलम्बः कर्तुं न शक्यते । कर्मादिभिस्तु विलम्बेनैव तत्सिद्धिः । **स्वाकिञ्चन्य-विरोधतः** स्वयमकिञ्चनतया बहुवित्तव्ययायाससावधान संपाद्यकर्मादिष्वधिकारो नास्तीतिभावः । किञ्च - एवं विधयुक्तिभि स्वस्यात्यन्तापरतन्त्र्यस्य अनुपायत्वे निश्चयः कर्तुं सुशकः । ल्यबर्थमाह - सर्वमिति । दूरतः इत्यनेन तद्वासनापि त्यज्यतेति प्रतिभाति । अयमुपसर्गार्थः । अयं सर्वधर्मपरित्यागो नानूद्यते । किन्तु व्रजेति स्वीकार विधेरङ्गमित्याह **त्यागमिति** ।

**त्यागं स्वीकारविध्यङ्गं विनिश्चित्य च मां ततः ।**
**त्वत्सारथ्य स्थित्वेन सुशीलं भक्तवत्सलम् ।। ५५ ।।**

यथा "स्नात्वा भुञ्जीतेत्यत्र" स्नानं भोजनाङ्गं तथेत्यर्थः । विनिश्चित्य विशेषेण निश्चित्य त्यागस्याङ्गत्वाभावे उपायान्तरान्वये प्रायश्चित्तं नोपपद्यत इति भावः । मामित्यस्य तात्पर्यमाह त्वत्सारथ्येति । महातोमन्दैस्सह निरन्ध्रेण संश्लेषशीलम् । एवं विधोऽहमनेन सम्बन्ध इति बुद्धिराहित्यम् ।

---

A 1. विरोधतः, A 2. स्वानुपायत्व

सौशील्यं भक्तवत्सलमिति स्वामित्व सौलभ्ययोरुपलक्षणम्। चतुर्णामपि गुणानां समाश्रयणोपयुक्तत्वात् । एक शब्दार्थमाह अनन्येति ।

**अनन्यापेक्षरूपत्वादद्वितीयमनुत्तमम् ।**
**अनिष्टध्वंसने दक्षमुपायं परिचिन्तयन् ।। ५६ ।।**

अनेनेत्युक्तोपाय वैशद्यं द्योत्यते । सिद्धोपायो भगवान् सर्वज्ञं सर्वशक्तिर्निपरपेक्षोपाय रहितश्चेत् कर्मयोगाधिकारत्वाचेतनत्वात् स्वरूपविशुद्धाचेतनसापेक्षं फलसिद्धौ भगवत्सापेक्षं च । प्राप्यप्रापकयोरैक्यं सकलफलप्रदत्वं स्वप्राधान्यं च द्योतयतीत्यनुसन्धेयम् । अथ शरणं व्रजेत्यस्यार्थमाह अनिष्ठेति । शरणशब्दः उपायवाचि । उपेयत्वञ्चानिष्टनिवर्तकमिष्टप्रापकत्वं च। व्रजनस्यार्थकरणत्रयसंपाद्यत्वमाह **मनोवागिति** ।

**मनोवाक्कायसंपन्नगतित्रितयगोचरम् ।**
**व्रजनं सर्वभावेन कुरुविश्वासपूर्वकम् ।। ५७ ।।**

**अहं स्वाधीनसर्वात्मबन्धमोक्षविधिक्रमः ।**
**सार्वज्ञसर्वशक्तित्वपूर्तिप्राप्ति[A1] दयानिधिः ।। ५८ ।।**

सर्वभावेन - सर्वप्रकारेण महा**विश्वासपूर्वकं** व्रजनं कुरु । तदेकोपायत्वबुद्धिं कुर्वित्यर्थः । अथ प्रत्पत्तव्यकृतमुत्रार्धेनोच्यते । तत्राहमित्यस्यार्थमाह-**अहमिति** । सर्वात्मना बन्धस्य संसारस्मृत-मोक्षस्य विधिप्रवर्तनस्य (च कुर्यरिति) क्रमः । सतु भगवदधीनेत्यनेन समाश्रितकार्यकरसर्वकारणत्वमुक्तम् । गुणान्तरं च तदुपयुक्तमाह-**सर्वज्ञेति** । त्वामित्यस्यार्थमाह **मयीति** ।

---

A1 महोदधिः

मयि निक्षिप्य कर्तव्यं तत्र निर्भरमुज्ज्वलम् ।
त्वां प्रपत्तिक्रियामुद्रा मुद्रितन्मत्परायणम् ।। ५९ ।।

भगवत्प्रपत्तिनिष्टस्यात्मेत्यादिकं सर्वं तस्मिन्नेव निक्षिप्तम् । सकृत्कृतैव प्रपत्तिर्मोक्षसाधिका, तस्याश्च इतरसापेक्षता न विद्यते। ततः कृतकृत्यवेन नित्यमुक्तवत्प्रतिभात्ययं सिद्धिसाधननिष्ठ इत्यर्थः । एवं निक्षिप्ताकर्तव्यत्वेन प्रपन्नस्य कर्तव्यान्तरं न विद्यत एव । तथा हि भगवन्मुखोल्लाय हेतुत्वेन नित्यमुक्तेः क्रियमाण कैङ्कर्यवद्यावच्छरीरपातं वर्णाश्रमविहितकर्मानुष्ठेयमेव ।

यथोक्तम् -

अविप्लवाय धर्माणां पावनाय कुलस्य च ।
सङ्ग्रहाय च लोकस्य मर्यादास्थापनाय च ।।

प्रियाय मम विष्णोश्च देवदेवस्य शार्ङ्गिणः ।
मनीषी वैदिकाचारं मनसापि न लङ्घयेत् ।।

इत्यत्र मनीषीति प्रपन्न उच्यते, तत्प्रकरणत्वात् । तत्र भगवत्प्रीतिरेव साक्षात्प्रयोजनम् । धर्मविप्लवादिकं तदुपयुक्तत्वेन प्रयोजनं बोद्धव्यम् । अकरणे प्रत्यवायश्च विशेषो उच्यते ।

"यदाह वल्लभो राज्ञो नदीं राज्ञा प्रवर्तिताम्" ।
लोकोपयोगिनां रम्यां बहुशस्य विवर्धिनीम् ।

लङ्घयन् मूलमारो हि धनापेक्षोऽपि तां प्रति ।
एवं विलङ्घयन् मर्त्यो मर्यादां वेदनिर्मिताम् ।।

प्रियोऽपि न प्रियोमेऽसौ मदाज्ञाप्यतिवर्तनात् ।

इति प्रपन्नानां कर्तव्यं च विभज्योक्तम् ।

तथैव -

क्रियमाणं न कस्मैचिद्यदर्थाय प्रकल्पते ।
अक्रियवदनर्थाय तत्तुकर्म समाचेरत् ।। इति ।।

वक्तव्यशेषस्तु तन्त्रसारेऽस्मकृते द्रष्टव्यम् ।
पुनरपि त्वां विशेष इति प्रपत्तिः क्रियते ।।

**प्रपत्तिकरणमुद्रामुद्रितत्वेन** स्वस्य साध्यसाधनविषय प्रयत्नान्वयो न विद्यतेति भावः । अत एव **मत्परायणम्** । अथ सर्वपापशब्दार्थमाह **पूर्वेति** ।

**पूर्वोत्तरारब्धकारविभागेन विशेषितात् ।**
**निरस्त संख्याद्दुर्मोचान्निखिलात्पापसञ्चयात् ।। ६० ।।**

पूर्वाघोत्तराघप्रारब्धभेदेन त्रिधा भिन्नोऽयम् । सर्वशब्दार्थः निरस्तसंख्यादित्यनेन बहुवचनार्थः दुर्मोहात् । भगवत्प्रतिपत्ति-मन्तरेण केनापि मोचयितुमशक्यात्पापसञ्चयादत्र पापशब्देन पुण्यमपि संगृह्यते । तस्य मोक्षविरोधिफलहेतुत्वात् । मोक्षयिष्यामीत्यस्यार्थमाह मुक्तमिति ।

**मुक्तमेवं करिष्यामि सङ्कल्पादेवमामकान् ।**
**कथं लभेतावस्थानं तमस्समुदिते रवौ ।। ६१ ।।**

तस्मादुपायसाध्यत्व दुष्करत्व विशेषतः ।
फलासिद्धिविलम्बाश्च न शोकं कर्तुमर्हसि ।। ६२ ।।

इत्थं पार्थ समुद्दिश्य विधानाच्चरमोदितात् ।
भवता बहुमन्तव्यां प्रपत्तिमनुसन्धत्ते ।। ६३ ।।

**सङ्कल्पादेव** ममाप्यतिभारो नास्तीत्यर्थः । तत्रदृष्टान्तमाह **कथमिति** । माशुचः इत्यस्यार्थमाह **तस्मादिति** । पूर्वोक्तार्थ-स्मरणात् **इत्थमिति** । एवं श्लोकार्थमनुसन्धाय शरण्यस्य शरणागतिरिव, अतिप्रयुक्तमेवोपाय इति सोपपत्तिकमनुसन्धत्ते । अयमर्थः अशास्त्रविहितं त्वननुष्ठेयम् । शास्त्रविहितं च शिष्टपरिगृहीतेनानुष्ठेयम् । यथा गवालम्भादि उभयसंभवेऽपि शरण्याभिमतत्वेन यामिनीमानि पुष्पितानीत्यादिकमालोच्य मुमुक्षुभिः फलाभिसन्धिरहितं कर्म त्यज्यते । प्रपत्तिस्तु शास्त्रशिष्टाचार सिद्धत्वात् कर्मयोगज्ञानयोगादिकमुपदिश्य तत्यागपूर्वकमति रहस्येनोपदिष्टत्वाच्च शरण्याभिमतत्वं ज्ञायत एवेति सदाचार्य कटाक्षेण रहस्यत्रयज्ञानं मे जातमित्युक्त्वा रहस्यार्थश्चानुसंहित-मेतावता प्रबन्धेनेत्यवगन्तव्यम् ।

।। चरमश्लोकप्रकरणं समाप्तम् ।।

इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीमन्नारायणमुनेः कृतिषु
अध्यात्मचिन्ताव्याख्येन अध्यात्मचिन्तामणौ
द्वितीयः परिच्छेदः ।।
।। श्रीः ।।

## ।। अथ तृतीयः परिच्छेदः ।।

एतावन्तं सदध्वानमित्थं मां कृपया नयन् ।
शेषाध्वलेशनयनं त्वमेव कुरु माधव ।। ६४ ।।

त्वत्स्वरूपगुणाकारविभूतिविषयां मतिम् ।
विशदीकृत्य तां देव भक्तिरूपां कुरुष्व मे ।। ६५ ।।

परभक्तिपरज्ञानं परमां भक्तिसम्पदम् ।
आविष्कुरु ममात्यर्थमात्मधर्मत्वयोगतः ।। ६६ ।।

दिव्यकटाक्षप्रभृति एतावत्त्वया संपादितं इतःपरं कृत्यशेषं च त्वमेव निवर्तयेत्याह **एतावन्तमिति** । वर्तमानस्य प्रपन्नस्य कृत्यस्य-कर्तव्याशाभावेऽपि कालक्षेपाभि(मानं)मात्मवृत्तितया भगवन्तं प्रार्थयति । तत्र स्वरूपगुणविभूति विषयमिति मा विस्मृत । तस्याः प्रेमकृतां सम्पादयेत्याह-**त्वत्स्वरूपेति** । एतच्च प्राप्तुरत्त्वरा जननार्थं पुनश्चतस्याभिमतेरवस्थाभेदमाह **परभक्तिमिति** । भगवद्विषयविशदतररूपज्ञानस्यपरभक्त्यादिभिर्निर्देशः ।

यद्वा -

परभक्तिस्तु तज्ज्ञानं परज्ञानं तु तत्त्वगम् ।
पुनर्विशेषभीरुत्वं परमाभक्तिरुच्यते ।। इति ।।

अभियुक्तोक्त्यार्थान्तरं भगवदुभयत्र विचार्यमाणानात्यन्तं वार्थभेदः । एतेषामात्मधर्मत्वादाविष्कारमात्रमेव कर्तव्यम् । सद्मानिवृत्ति प्रतिबन्धकस्य कथमेतद्युज्यत इत्याशङ्क्य प्रतिबन्धनिवृत्तिरहित (तया) कर्तव्येति विज्ञापयति पूर्वाघमिति ।

पूर्वाधमुत्तराघं च समारब्धमघं तथा ।
त्वत्प्राप्तिरोधकं कृत्स्नं निःशेषं परिहारय ।। ६७ ।।

पूर्वाघशब्देन पूर्वकृतं पुण्यपापरूपं कर्मेत्युच्यते । उत्तराघशब्देन करिष्यमाणम् । समारब्धं फलोन्मुखं प्रारब्धं एतत्सर्वं भगवत्प्राप्ति विरोधकृत्यं नैकदेशावस्थाने एव फलावाप्तिरितिभावः । निःशेषं स वासनं सर्वपापेभ्य इति ह्युक्तम् । अत्रायं क्रमः - द्विविधं पापं पूर्वाधं द्विविधं, प्रारब्धमप्रारब्धमिति । प्रारब्धं च द्विविधं, अभिमतमनाभिमतं चेति । उत्तराघस्यापि बुद्धिपूर्वभेदेन द्वैविध्यम् । तत्र भक्ति निष्ठस्याप्रारब्धफलपूर्वाघनिवृत्तः । श्रूयते हि - "यदेषिकतूलमग्निप्रोतं प्रदूयते, एवं होस्यास्सर्वे पाप्मानः प्रादूयन्ते" इति । न च प्रारब्धस्यापि नाशः, सर्ववचन सङ्कोचायोगादिति वाच्यम् । "नाभुक्तं क्षीयते कर्म कल्पकोटि शतैरपि इति विशेषवचनात् । विद्या(मा)हात्म्यादुत्तराघं बुद्धिपूर्वकं न प्राप्नोति । यथा "पुष्करफलाशमापो न श्लिष्यन्ते' एवमेवं विधितपापं कर्म न श्लिष्यत इति श्रुतेः । त्रिविधास्त्वधिकारिणः । उत्तममध्यमाधमभेदात् । उत्तमास्तु पापे न प्रवर्तन्ते । मध्यमास्तु पापं कृत्वा तदुचितं प्रायश्चितं कुर्वन्ति । अधमास्तु कृत्वा तु पापं न ह्यधःप्राप्नुवन्ति । तानुचित दण्डैरीश्वरो दण्डयित्वा पुनरप्यङ्गीकरोति । यदि बुद्धिपूर्वस्याश्लेषः तदा "नाविरतो दुश्चरितान्" इत्यादि बहुप्रमाण विरोधः स्यात् । प्रपन्नस्यातः विशेषोऽस्ति । प्रारब्धोप्यननुमतस्य विनाशस्मरणात् । एतच्च दृप्तविषये । आर्तविषये तु सर्व प्रारब्धं नाशयित्वा तदैवाङ्कगीरोति । यथोक्तम् -

आर्तानामाशुफलदा सकृदेव कृताप्यसौ ।
दृप्तानामपि जन्तूनां देहान्तरनिवारिता ।। इति ।।

आर्तस्य सद्विमुक्तिस्यात्प्रपत्तिर्भूयसे यतः । इति च बुद्धिपूर्वोत्तराघ-प्रपन्नस्यादिति शिक्षणस्त लघुर्दण्डः । प्रपन्नस्य राजपुत्रापराधि-वदिव वचनादित्येतत्सर्वमभिप्रेत्योक्तमाचार्यैः -

[1]प्रारब्धेतर पूर्वपापमखिलं प्रामादिकं चोत्तरं
न्यासेन क्षपयन्ननभ्युपगतप्रारब्धखण्डं च नः ।
धीपूर्वोत्तरपाप्मनामजननाज्जातेपि तन्निष्कृते
कौटिल्ये सति शिक्षयाप्यनघयन् क्रोडीकरोति प्रभुः ।।

इति । अथ शरीरादिषु सङ्घमोचनं कुर्वित्याह - शरीरेति ।

**शरीरे दारपुत्रादौ पशुक्षेत्रादिके तथा ।**
**सङ्घदुर्मोचमखिलं सहसैव विनाशय ! ।। ६८ ।।**

अधिकारिणो ह्यवश्यं परिहरणीयः शरीरादयः प्रतिकूलतयाभाव्यः । यथोक्तम् -

क्षेत्राणि मित्राणि धनानि नाथ
पुत्राश्चधाराः पशवो गृहाश्च ।
त्वत्पादपद्मप्रवणात्मवृत्ति-
र्भवन्ति सर्वे प्रतिकूलरूपाः ।। इति ।।

अथ सर्वेश्वरवत्त्वतमप्राप्यभूत भागवतप्रतिपत्तिं उत्तरोत्तरमभिवृद्धिं (च) कुर्वित्याह त्वद्गुणेति ।

**त्वद्गुणानुभवास्वादरसिकेषु महात्मसु ।**
**त्वदीयेषु परं प्रेम त्वमेव परिवर्धय ।। ६९ ।।**

त्वदीयं गुणं ज्ञानशक्तिसौलभ्य (सौ)शील्यवात्सल्याद्यपरिमित-दिव्यचेष्टितानामुपलक्षणमेतत् । आस्वादरसिकत्वकथनो

1. रहस्यत्रयसारे - अधिकारः 18 - श्लो - 41

गुणानुभवस्यैवात्मधारकत्वम् । पुनपुनस्तत्रैव परमप्रेमत्वं तन्मयत्वं च व्यज्यते । अत एवमाहुर्महात्मना महामनस्विनः त्वदीयेषु त्वामेवोपायोपेयतां स्वीकृत्य त्वद्दास्यैकरसमात्मनां मन्वानेषु परं त्वत्तोप्यधिकं प्रेमत्वमेवोत्तरोत्तरमभिवृद्धिं कुरु" (इति) । उक्तं हि भगवता -

मम मद्‌भक्तभक्तेषु प्रीतिरप्यधिको भवेत् ।
तस्मान्मद्‌भक्तभक्ताश्च पूजनीयो विशेषतः ।। इति ।।

तथा च वेदान्ताचार्यः -

त्वय्याचार्यैर्विनिहितभरास्तावकारङ्गनाथ-
त्वत्कैङ्कर्यैकप्रवणमनसस्त्वद्‌गुणास्वादमत्ताः ।
त्वय्येकस्मिन्नपि विजहतो मुक्तवत्साधनत्वं
त्वच्छेषत्वस्वरसरसिकास्सूरयो मेस्वदन्ताम् ।।

अथ द्वयार्थानुसन्धानेन सह सदैवं वक्तीति परमाचार्यवचन- क्रमेण स्वस्यापि तत्रार्थयते **द्वयेति**।

**द्वयार्थगतवाक्चित्तं तापैस्त्रिभिरनाकुलम् ।**
**यावच्छरीरपातं मां कुरुष्व त्वं त्वदन्तिके ।। ७० ।।**

वाचामन्त्रमुच्चरन्मनसार्थं स्मरन्नित्यर्थः । तदुपयुक्तपरिकरमाह तापैरिति । यावच्छरीरपातं आध्यात्मिकाधिभौतिकाधिदैविकरूपताप-त्रयाभिहतिविरहे मनस्स्वस्थं भवति । तस्यान्यविषयप्रवृत्तिं निवार्य श्रियःपतौ वात्सल्यादिगुणसागरे स्वाभिमतानुरूपदिव्यमङ्गल-विग्रहयुक्ते सर्वसमाश्रयणीयशारदाम्बोजसदृशदिव्यशरणसकला-पन्निवारकव्याजमात्रेण सर्वरक्षकोभयविभूतिनायकोऽनन्यप्रयोजन-कैङ्कर्यकरनित्यमुक्तानु भावस्वरूपस्वभावे मनो निवेशय, तदर्थप्रतिपादकद्वयं च सदानुसन्दध्यादिति भावः । अनेन साधनानुष्ठानस्य क्षणमात्रसाध्यस्य केनाप्यन्वयाभानेऽपि

स्ववृत्तितयानुसन्धानमुचितं इति रम्यते । न तावन्निवृत्तिप्रार्थन-यानन्यप्रयोजनत्वविरोधः, द्वयानुसन्धानसौकुमार्यमात्रहेतुत्वात् । उक्तं हि -

श्रीरङ्गे शरदःशतं सह सुहृद्वर्गेण निष्कण्टकं
निर्दुःखं ससुखं च दास्यरसिकां भुक्त्वा समृद्धिं परम् ।

इति । अयमर्थ प्रपत्तिकरणानन्तरमुक्त एव तद्देहाभिरुचि, तेनवक्तया किञ्चित्कालमीश्वरं स्थापयति । तत्र वर्तमानेन क्रियमाणं सर्वं स्वोचितशेषविषयकैङ्कर्यमेव । अतस्तदुपयुक्त प्रार्थनाचात्यन्तमुप-पन्नैवेति । एवं ज्ञानभक्तिसम्पद्यादि प्रार्थनमपि उपायान्तर्भूतमिति न सङ्कटं, किञ्चित् । प्रपन्नानां दुःखात्यनुभवं भगवान् हित बुध्या करोति । स्मर्यते हि -

हरिर्दुःखानि भक्तेभ्यो हितबुध्या करोति हि ।
शास्त्रक्षारग्निकर्मणि स्वपुत्राय हिता यथा ।। इति ।

हितं च - विषयान्तरवैमुख्यकरणं स्वविषयस्मरणकारणं च ।

यथाहुर्वेदान्ताचार्याः-

शोकास्पदांशमनथनश्रयतां भवाब्धौ
रागास्पदांशसहजं न रुणत्सि दुःखम् ।
नोचेदमी जगति रङ्गधुरीणभूयः
क्षोदिष्ठ भोगरसिकास्तव न स्मरेयुः ।। इति ।

तथा च शाण्डिल्यः -

यथा यथा हि खिन्नस्यात्सांसारिकसुखोदये ।
तथा तथा दृढं योगी निर्वाणपदमृच्छति ।।

अपवर्गरसज्ञोऽपि सन्मानाद्दुःखवर्जितः ।
मोक्षधर्ममना नित्यं सुखं चरितदुःखवत् ।।

योगिनामवमानं च शरीरक्लेश एव च ।
अर्थहानिश्च विज्ञानं वर्धयत्यग्निमान्द्यवत् ।।

यस्य सांसारिकं सौख्यं योगिनो नेह संभवेत् ।
अनायासेन लभ्यं स्यात्तस्य तत्परमं पदम् ।।

अविज्ञातमना नित्यं तवैरभिमतो हि सन् ।
अक्लेशेन चरेत्प्राप्तो (स)विशुद्धप्रकारतः ।। इति ।।

त्वदन्तिकमित्यनेन यावच्छरीरपातमत्रैव श्रीरङ्गे सुखमास्वेति परमाचार्योक्तश्रीरङ्गादि दिव्यक्षेत्रे वास्तव्यमित्यवगम्यते । तदीयावासभूमिश्चात्र लक्ष्यते ।

निगृहीतेन्द्रियग्रामो यत्र यत्र वसेन्नरः ।
तत्र तत्र कुरुक्षेत्रं नैमिशं पुष्करं तथा ।। इति ।।

तदीयाधिष्ठितस्यापि देशस्य पावनश्रवणात्, स देश एव मुख्यः । तत्र सर्वेश्वरस्य नित्यसन्निहितत्वात् । यथोक्तम् -

"वसन्ति वैष्णवा यत्र तत्र सन्निहितो हरिः" ।

इति दिव्यस्थलेषु भगवतोऽतिप्रीतिश्च तत्रत्य भागवतद्वारैव । यथा हि -

"प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रियः" । इति ।

अत एव भागवताधिष्ठिते देशे न सांसारिकदुःखानुभूतिः ।

यत्राष्टाक्षरसंसिद्धो महाभागो(म)हीयते ।
न तत्र सञ्चरिष्यन्ति व्याधिदुर्भिक्षतस्कराः ।। इति ।

अह महाविश्वासस्य नैश्चलयं मे भूयादित्याह योसाविति ।

**योऽसौ द्वयैव दत्तो मे व्यवसाय महोदयः ।**
**कुरुष्व निश्छलममुं यावत्प्राप्त्यनुवर्तनम् ।। ७१ ।।**

एवं आदेहपातं स्वस्य कर्तव्यविशेषं भगवत एव लब्धदेहावसाने च विषयान्तरस्पृहं निवार्यत्व, (रूप) द्वयविषयसम्यङ्ज्ञानं मे देहीति विज्ञापयति **ततो देहेति** ।

**ततो**[A1] **देहावसाने च त्यक्तस्सर्वेतरस्पृहः ।**
**त्वामेवातिप्रबुद्धस्सन् पश्येयं भगवन्नहम् ।। ७२ ।।**

नह्यत्रावश्यमन्तिमस्मृतिसापेक्ष्यत्वमुच्यते, प्रपन्नस्य तदनपेक्षत्वात्। यथोक्तं आदिवराहेण -

स्थिते मनसि सुस्वस्थे शरीरे सति यो नरः ।
धातुसाम्ये स्थिते स्मर्ता विश्वरूपञ्च मामजम् ।।

ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम् ।
अहं स्मरामि मद्भक्तं नमामि परमाङ्गतिम् ।। इति ।

तत्र भक्तशब्देन प्रपन्न उच्यते, साध्यभक्तिनिष्ठत्वात्तस्य । अयमर्थः धातुसाम्ये स्थितं शरीरं स्वस्थो भवति । तदा सति मनो व्याकुलं न तिष्ठति । तदा यस्तु यत्र कुत्रापि सञ्जातो यद्यद्गुणो हि भवति सर्वोत्पत्तिस्थितिलयनिदानं वात्सल्यादिगुणसङ्कर-मजहत्स्वरूपं मां कदाचित्स्मरति । कदाचित् स्मरणव्याजेनैव मरणवेलायामचेतनप्राप्तं विपरीतबुद्धिं वा तं मत्प्रिय एवेत्यङ्गीकृत्य अनेन मत्कृत्यं तं मत्कथाश्रवणालापादिषु विमुखे संसारे अङ्गारनिलये सरसिजोदयवन्मां स्मरेत् । अहं किं

---

A1. अथ

करवाणीति प्रत्युपकारमिति सर्वदा तवचिन्तयन् परमाङ्गतिं अर्चिरादिगतिमसहन्निव गरुडस्कन्दमारोप्य नयामीति । भक्तिकरणं चेत्, ततः काष्ठपाषाणसन्निभं (इति)वदन् तन्निवर्तयेत्याह अव्यक्तेति।

**अव्यक्तबुध्यहङ्कारज्ञानकर्माक्षमानसैः ।**
**स तन्मात्रमहाभूतैः परिकल्पितमादिताः ।। ७३ ।।**

अव्यक्तं-प्रकृतिः । सा च सत्वरजस्तमोगुणयुक्ता प्रतिक्षण-परिणामिनि परमव्यक्तरूपा प्रधानादिवदावेदनीया । बुद्धिशब्देन महत्तत्वमुच्यते । सा च प्रकृतेः प्रथमपरिणामकर्तव्यमेतदिति । अध्यवसायजनकत्वाद्बुद्धिरित्युच्यते । सात्त्विकानि धर्मज्ञाने, वैराग्याणि तमसा, अस्य धर्मज्ञानवैराग्यानैश्वर्याणि चैतद्बला-दात्मनि जायन्ते । महत्कार्यमहङ्कारः । ममेदमहमात्राधिकारीति ज्ञानहेतुः । स च त्रिविधः । वैकारिकास्तेजसि भूतादिश्चेति, तत्र सात्त्विकाहङ्कारात् । वैकारिकाच्छ्रोत्रत्वक्चक्षुर्जिह्वाघ्राणरूप पञ्चज्ञानेन्द्रियाणि मनश्च जायन्ते, तामसाहङ्कारात् । भूतादि शब्दतन्मात्रादि सहितान्याकाशवायुवह्निजलरूपाणि भूतानि जायन्ते एतैश्चतुर्विंशतितत्त्वैरारब्धं शरीरमित्यर्थः । जुगुप्सानिलयत्वाय कारणान्तरमप्याह चर्मेति ।

**चर्मसृङ्मांसमेधोऽस्थि मज्जा शुक्लादि संयुतम् ।**
**तथामूत्रपुरीषादिपूर्णं नित्यं जुगुप्सितम् ।। ७४ ।।**

इमञ्चार्थान्तरन्यासेनाह मनुः -

अस्थिस्थूणं स्नायुबद्धं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धिपूर्णं मूत्रपुरीषयोः ।।

[1]जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ।। इति ।

तथा पराशरः -

मांससृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहता ।
देहे च प्रीतिमान्मूढौ भविता नरकेऽपि सः ।। इति ।

तथा व्यासश्च -

सर्वाशुचिविधानस्य कृतघ्नस्य विनाशनः ।
शरीरकस्यापि कृते नराः पापानि कुर्वते ।। इति ।।

तथा विविच्य प्रतिपादयति याज्ञवल्क्यः -

[2]तस्य षोडाशरीराणि षट्त्वचोधारयन्ति हि ।
षडङ्गानि तथास्थ्नां च सह षष्ठ्या शतत्रयम् ।। इति ।

अस्यार्थः - तस्यात्मनो यानि जरायुजाण्डजानि शरीराणि तानि प्रत्येकं षट्प्रकारेण रक्तादिः । षष्ठी तु परिवारहेतुभूत षटङ्गनियोगित्वेन ।

तथाहि -

अन्नरसो जाठरेनाग्निना पक्वमास्थितम् । अस्थ्यपि स्वकोशशिखिना पक्वं मज्जात्वम् । मज्जापि स्वकोशपावकपरिपच्यमाना चरमधातुतया परिणमते । चरमधातोस्तु परिणतिर्नास्ति इति । स एवात्मनः प्रथमः कोशः इत्येवं षट्कोशाग्नियोगित्वाद्युक्तं षट्प्रकारत्वं शरीरिणाम् । अन्नरसरूपस्य तु प्रथमधातोर्नियतत्वान्न तेन प्रकारत्वम् । तानिशरीराणि "षट्त्वचाधारयन्ति । रक्तमांसमेधोऽस्थि मज्जा शुक्लाख्याः षट्पीतएवोपरम्भस्तम्भत्वं च इव ।

---

1. मनुस्मृतिः 6 - 77; 2. याज्ञवल्क्यस्मृतिः 3 - 84

बाह्याभ्यन्तररूपेण स्थिता त्वच इवाच्छादकत्वात् त्वचः षट्त्वचो धारयन्ति । तथाङ्गानि च षडेव करयुग्मचरणयुगलं उत्तमाङ्गं गात्रमिति । अस्थ्नां तु षष्ठीसहितं शतत्रयमिति । तथा

स्थालैः सह चतुःषष्टि दन्ता वै विंशतिर्नखाः ।
पाणिपादशलाकाश्च तासां स्थानचतुष्टयम् ।।

स्थलानि - दन्तमूलप्रदेशस्थान्यस्थीनि द्वात्रिंशत् । तैस्सह द्वात्रिंशद्दन्ताः चतुःषष्टि भवन्ति । नखाः विंशतिः प्रसिद्धाः । हस्तपादस्थानि शलाकाकाराण्यस्थीनि मणिबन्धस्योपरिवर्ती-न्यङ्गुल्यास्थीनि विंशतिरेव । तेषां नखानां शलाकस्थानानां च स्थानचतुष्टयं "द्वौ चरणौ करौ चेति" । एवमस्थीनां चतुरुत्तरं शतमिति ।

षष्ट्यङ्गुलीनां द्वे पाष्ण्योर्गुल्फेषु च चतुष्टयम् ।
चत्वार्यरत्निकास्थीनि जङ्घयोस्तावदेव तु ।।
भगास्थेकं तथा पृष्ठे चत्वारिंशश्च पञ्च च ।

सम्यक्परिणताहार साङ्गो रसः तस्यपरिमाणं तु पञ्चलयः । पार्थिवपरिमाणं शेषनिमित्तस्य जलस्याञ्जलयो दश । जठरानल-परिपाकादि । तथाहीत्यस्यान्तररसस्याधारेण नश्वरमधातोस्ताव-देवार्थञ्जलि पुष्पाञ्जलयः । श्लेष्मणः कफस्य पडञ्जलयः । वसायामां सन्निहास्य त्रयः । मेधरा मांसररसस्य द्वावञ्जलिः । मज्जावस्थित सतस्मैकाञ्जलिः । ते के पुनः द्वावञ्जलिः श्लेष्माजनः श्लेष्मसारसश्च । तथा रेतसश्चरमधातो वा देवार्थाञ्जलिरेव । एतच्च समधातु पुरुषाभिप्रायेणोक्तम् । विषमधातोस्तु न नियमः यथोक्तं वैलक्षण्यात् । शरीराणमपि

---

1. याज्ञवल्क्यस्मृतिः 3 - 85 & 86

स्थायित्वायत्तत्वात् । तथैव च - "दोषधातुमलानां तु परिणामं न विद्यते" इति । तत्सर्वं वैराग्यजननाय प्रपञ्चितमिति ज्ञेयम् ।

**इदं शरीरं दुःखैकनिदानं परिहास्य च ।**
**नाड्या शतातिशायिन्या मान्निर्गमय देहतः ।। ७५ ।।**

**वह्नहः शुक्लपक्षोदगयनाब्दानिलास्थितात् ।**
**मार्गात्तैस्सत्कृतो गत्वा भित्वा सूर्यस्यमण्डलम् ।। ७६**

तानि च शरीराणि दिव्यादिव्यतया द्विविधानि । सर्वाणि पाञ्च-भौतिकादीनि दिव्यान्ययोजनानि । अदिव्यानि मातापितृजानि षट्कौशिकानि । तत्र मातृतो लोमलोहितमांसानि पित्तां च स्नाय्वस्थिमज्जा इति । सूक्ष्मशरीरं चान्यदेव । तं च बाह्यान्तर-कारणाधारं पञ्चतन्मात्र समुदायः, शरीरान्तवर्तिच्च कल्पादौ प्रतिमेकैकमत्यं विद्यते, कल्पान्ते च विलीयन्ते । तदेव पुण्यपाप-वासनावासितं नानाशरीरं अनुप्रविशतीति सर्वं ज्ञेयम् । नाडी-विशेषेण निर्गतमनः (एव)माह-**नाड्येति** । नाड्यस्तु देहवर्तिन्या द्विसप्तति सहस्रसंख्याकाः । द्विसप्तति सहस्राणां नाडीनां देहवर्तिनामिति वचनात् । तत्र एकोत्तरशतं हृदये नाड्यः ।

[1]शतं चैका च हृदयस्या नाड्यस्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्गन्या उत्क्रमणे भवन्ति ।।

इति । तथा (च)स्मृतिः -

"सुषमा मोक्षमार्गस्यात् ज्वलन्ती विश्वधारिणी" इति ।

उत्क्रमणप्रकारश्च श्रूयते - "अस्ये सौम्ये ! पुरुषस्य प्रयतो वाङ्मनसि संपद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां

---

1. याज्ञवल्क्यस्मृतिः 3 - 85 & 86

देवतायां" इति । वाचो मनस्संयोग कथनमिन्द्रियाणामुप-लक्षणार्थम् । सर्वेन्द्रियसंयुक्तं मनः प्राणे संयुज्यते । स च प्राणेजीवे संपद्यते । एवमेवं ममात्मानमन्तकाले सर्वे प्राणाभि-समायन्ति इति श्रवणात् । प्राणस्तेजसीत्यत्र तेजश्शब्देन भूतान्तराणि उच्यन्ते । एवं विधो जीवः परमात्मनि संपद्यते । एवं परमात्मसहितः प्रयाति, नाडीनां सूक्ष्मत्वात् । तद्विवेको नोपपद्यत इति वाच्यम् । साधनप्रीतेन भगवता तद्विवेककरणोपपत्तेः । हृदयान्मूर्धन्यया निर्गत्यादित्यकिरणानुसृत्य गच्छति । अथ यतैतदस्माच्छरीरादुत्क्रमति । अथैतैरिव रश्मिभिरूर्ध्वमुत्क्रमत इति श्रुतिः। न च रात्रोमृतानां सूर्यरश्मिभावान्नियमो नास्तीति वाच्यम् । रात्रावपि सूर्यरश्मिनां विद्यमानत्वात् रात्रावपि घर्मकाले ऊष्मोपलब्ध्या रश्मयोऽपि सन्तीति ज्ञायते । हेमन्तादौ तु हिमाभिभवात्तदनुपलब्धेः । तथा नाडि रश्मीनां च अन्योन्यान्वय श्रूयते । तद्यथा "महापथ आतत उभे ग्रामं गच्छति । इयमुञ्चा-मुञ्च एवमेवैते आदित्य रश्मयः । उभौ लोकौ गच्छन्ती इमञ्चामुञ्चामुष्मदादित्यात् प्रतीयन्ते । त आसु नाडिषु सुप्ता आभ्यो नाड्यः प्रतीयतैतेऽमुष्मन्नादित्ये सुप्ता" इति । ननु भवत्येवं निशि रश्मय इति तथापि निशामरणस्य गर्हितत्वात् । तत्र मृतानां न ब्रह्मप्राप्तिः ।

> दिवा च शुक्लपक्षश्च उत्तरायणमेव च ।
> मुमोर्षतां प्रशस्तानि विपरीतं तु गर्हितम् ।।

इति वचनात् । नैवम् । प्रतिबन्धकाभावे ब्रह्मप्राप्तै विलम्बा-योगादनारब्धकार्याणां विद्या संबन्धादेव। विनाशः विद्यासम्बन्धादुपरि क्रियमाणानां न श्लेषः । प्रारब्धकार्यं कर्म च चरमदेहावसाय तस्मान्नकृतो विलम्बः। दिवा चेति वचनमविद्वद्विषय एव ! एवं दक्षिणायन मृतस्य ब्रह्मप्राप्तीति चेत् न; पितृयान पथा

चन्द्रप्राप्तानामेव पुनरावृत्तिः । विदुषः चन्द्रप्राप्तस्यापि "तस्माद्ब्रह्मणो महिमानमाप्नोति" इति वाक्यशेषाद्ब्रह्मप्राप्तिरस्त्येव । मध्ये चन्द्रप्राप्तिविश्रमस्थानमिति विज्ञायते । स्वेच्छामरणानां भीष्मादीनां उत्तरायणप्रतीक्षणं तत्रावश्यप्रदर्शनार्थम् । ननु आवृत्यनावृत्ति हेतुत्वेन कालविशेषविधिर्दृश्यते ।

यत्रकालेत्वनावृत्तिमावृत्तिञ्चैव योगिनः ।
यतायावृत्तिकालं वक्ष्यामि भरतर्षभ ! ।।

अग्निर्ज्योतिरहःशुक्लषण्मासा उत्तरायणम् ।
तत्र प्रयातागच्छन्ति ब्रह्मब्रह्मविदो जनाः ।।

धूमोरात्रिस्तथाकृष्ण षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगिप्राप्य निवर्तते ।।

शुक्लकृष्णगतिह्येते जगतश्शाश्वते मते ।
एकयाप्यनावृत्तिमन्ययावर्तते पुनः ।। इति ।

भेदेनात्र मरणकालविशेषदानं क्रियते । किन्तु योगिनां योगाङ्गतयानुदिनमेवं स्मरणं कर्तव्यमित्युपदिश्यते । उपसंहारे च "नैते सृती पार्थजानन्योगी मुह्यति कश्चन" इति स्मर्यते । अग्निर्ज्योतिरित्यादिना देवयान, देवयान, पितृयान प्रत्यभिज्ञानमेव । उपक्रमे च यत्र कालेष्विति कालशब्दकालाभिमानि देवतादिवाहिकपरं, अग्न्यादेः कालत्वायोगात् । अथार्चिरादिमार्गं स्थानावाप्तिरिति श्रूयते च अथ यदुचैवास्मि चव्यं कुर्वीतेति यदुचैव तेऽर्चिषमेवाभिसंविशन्ति । अर्चिषोरहरह्ना.आपूर्यमाणपक्षं आपूर्यमाणपक्षाद्यान्, षडुदङेति मासांस्तान्, मासेभ्यः संवत्सरं संवत्सरादादित्यं आदित्याश्चन्द्रमसं चन्द्रमसो वैद्युतं

तत्पुरुषामानवस्स एनान्ब्रह्म गमयति । एष देवपथो ब्रह्मपदः । "एतेन प्रतिपद्यमानमिमंमानवमावर्तन्नावर्तन्त" इति। अत्र श्लोकोक्तः केचन न सन्तीति श्रुत्यन्तरादवगन्तव्याः । एतेचार्चिरादयः आदिवाहिका देवतां विशेषानुग्राहकाः । साक्षाद् गमयितृत्वमानस्यैव स एनान्ब्रह्मगमयतीति वचनात्। ब्रह्मशब्दस्य परस्मिन्नेव मुख्यवृत्तिः । अन्यथा ब्रह्मणमिति स्यात् । न च ब्रह्मणः परिपूर्णत्वेन देशविशेषसापेक्षाविशिष्टदेशगतस्यैवानुभवश्रवणात् गतिशास्त्रं चैतत् ज्ञापकम् । एतेचैनं पूजयन्ति । "सर्वेऽस्मैदेवा बलिमावहन्ति" इति श्रुतेः । अराथा(द)ण्डादिकमतिक्रम्य गच्छ(ती)त्याह अण्डामिति ।

**चन्द्रविद्युज्जलेशेन्द्रप्रजापतिसुपूजितः ।**
**अण्डमावृत्तिभेदांश्च व्यतिवर्त्य दशोत्तरान् ।। ७७ ।।**

**अथ संख्याविहीनन्तदव्यक्तमतिवर्तयन् ।**
**विरजाममृताकारां मां प्रापय महानदीम् ।। ७८ ।।**

अत्रैकवचनेन तात्पर्यमण्डान्तरस्यापि सम्भवात् । स्मर्यते हि - अण्डानां बहुत्वम् ।

अण्डानां तु सहस्राणि सहस्राण्ययुतानि च ।
ईदृशानां तथा तत्र कोटिकोटिशतानि च ।। इति ।

मूलप्रकृतेरधः पार्श्वयोश्च परिच्छेदो नास्त्येव। तथाहि अथ इति । एवमण्डान्तदावरणांश्च व्याधिकृतं च क्षणमात्रेणा(ति)रिच्य विरजा नदीं प्राप्नोति । यथोक्तं ब्रह्माण्डे-

अण्डमावरजाणांश्च समतीत्य मुमुक्षवः ।
वैकुण्ठसीम्नि विरजां स्यन्दमानां नदीमपि ।।
प्राप्यावाह्यतीर्त्वैव त्यक्त्वा स्वीयं जरामपि । इति ।

तत्र चिरसक्तं कल्पादौ कल्पितं तस्य धूननं कृत्वा विरजायां तत्र प्रतिबन्धकजातं सर्वमपोह्य राहुविनिर्मुक्तचन्द्रवदुज्ज्वलस्वस्वभानो नदीमुत्तीर्य वैकुण्ठनामकं मुक्तिपदं प्राप्नोतीत्यर्थः ।

**कृत्वासूक्ष्मशरीरेण चिरसक्तस्य धूननम् ।**
**तस्माद्राहुविनिर्मुक्तिश्चन्द्रसन्निभमुज्ज्वलम् ।। ७९ ।।**

**तान्नदीं मनसातीर्त्या वैद्युतेनानुगच्छता ।**
**अमानवेन सहितं मां विभुतिं परां नय ।। ८० ।।**

एतावदत्र ज्ञातव्यम् । भूलोकादयस्तत्र लोकप्रमाणसिद्धाः पितृलोक, ऋषिलोक, सान्तानिकादयः येष्वन्तर्भूताः । आमोद प्रमोदसम्मोदाख्यास्त्रयः सत्यलोकस्योपरि वर्तन्ते । तदपरस्ता-दण्डभित्तिः । प्रकृते परस्तादप्राकृतं दिव्यारब्धमुक्तिपदम् । परमव्योमपरमाकाशवैकुण्ठपरमपदाद्यनेकशब्दाभिधेयं दिव्यं स्थानं अजरामरणमस्तीति नित्यनिर्दोषश्रुतिशतसमिधिगतम् । तथा च श्रुतिः "योऽस्याध्यक्षः परमे व्योमन्" इति । अस्याध्यक्षः अस्य-चेतनाचेतनात्मकस्य जगतः कर्ता परमव्योम्नि वैकुण्ठे वर्तते । तथा च पाञ्चरात्रे -

एकस्थितिमिमां धी मां विशालमतिदुस्तराम् ।
पश्य नास्तिपरो देवो परमव्योम्नि संस्थितः ।। इति ।

अत्र परमशब्देन प्रकृतेः परत्वं गम्यते । "क्षयं तमस्य रजसः पराके" इत्यत्रापि रजश्शब्देन तदाश्रय प्रकृतिर्लक्ष्यते क्षयं वसन्तं (इति ।) तथा परमव्योमसंहितायां-

अण्डस्यापि बहिस्तोयं तस्य तेजो बहिस्थितम् ।
तेजसोऽपि बहिर्वायुः वायोस्तु बहिरम्बरम् ।।

तस्माद्बहिरहङ्कारः तस्माद्बुद्धिर्बहिष्कृता ।
बुद्धेस्तुबहिरव्यक्तमव्यक्तात्पुरुषः परः ।।

परशक्तिमयोविष्णुर्वासुदेवस्सनातनः । इति ।

तथा श्रीरामायणे -

तमसःपरमो धाता शङ्खचक्रगदाधरः ।
श्रीवत्सवक्षो नित्यश्रीरजेयः शाश्वतध्रुवः ।। इति ।।

एवं च मुक्तिस्थानम् -

एकान्तस्सदा ब्रह्मध्यायिनो योगिनो हिते ।
तेषां तत्परमं स्थानं यद्वैपश्यन्ति सूरयः ।। इति ।।

विद्युत्पुरुषसंज्ञकेनामानवेन सह मां विभूतिं परमपदं नयेति व्यूहवैद्युतेनेति । वैद्युतामानवयोः केचिद्भेदं वर्णयन्ति ।

वैद्युतोऽमानवो नेता परमात्मा स एव हि । इति

पुरुषान्तरवचनादैक्यं च प्रतीयते । तत्र विभूतिं प्रविष्ठस्य ज्ञानादयो गुणाः भगवत्प्रसादात् प्रकाशन्त इत्यत्राह तत्रेति ।

**तत्र स्वाभाविकाकारानवबोधादिकान् गुणान् ।**
**अनन्तानपरिच्छिन्नानसंख्यान्मे प्रकाशय ।। ८१ ।।**

**ततस्त्वप्राकृतं दिव्यं शुद्धसत्वं प्रकाशकम् ।**
**पञ्चोपनिषदाकारं विग्रहं सुमनोहरम् ।। ८२ ।।**

**प्रापय्य दिव्यामोदन्ते रसं तेजः प्रवेश्य च ।**
**स्वस्वरूपाभिनिष्पत्या लब्धसाम्यं च मां कुरु ।। ८३ ।।**

ततश्चैरम्मदीयाख्ये तटाकेऽश्वत्थमूलतः ।
दिव्याप्सरो गणैः पञ्चशतसंख्यासमन्वितैः ।। ८४ ।।

मालाचूर्ण जनक्षौमभूषाशतसंख्या समन्वितैः ।
ब्रह्मालङ्काररूपेण सादरं समलङ्कृतम् ।. ८५ ।।

अभ्युत्थानार्थमायातैर्दिव्यजानपदैस्सुरैः
सङ्घशस्समवेतैश्च सत्कृतं संभ्रमाकुलैः ।। ८६ ।।

अवबोधः-ज्ञानम् । आदिशब्देन आनन्दादयो उच्यन्ते । यावदात्मभावित्वेन - अनन्तत्वम् । ब्रह्मसाक्षात्कारपूर्णत्वात् - अपरिच्छिन्नत्वम् । यथोक्तम् -

यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
दोषप्रहाणान्मद्ज्ञानमात्मनः क्रियते तथा ।।

यथोदपानकरणाद्यतते न जलाम्बरम् ।
स देव नियते व्यक्तिः नासतस्सम्भवस्तथा ।।

तथा हेयगुणध्वंसाववबोधादयो गुणाः ।
प्रकाश्यन्ते न जन्यन्ते नित्य एवात्मनो हि ते ।।

इति । अथ दिव्य विग्रहं दत्वा वत्सलं कृतं, तथा नित्यसूरिभिरपि सत्क्रियन्ते । **अभ्युत्थानार्थमिति** । अप्सरोरूपत्वं मुक्तानां स्वेच्छाकल्पितमिति न कुत्रापि विरोधः, एवमेवं शुकशारिकादि व्यवहारोऽपि । जानपद, पुरभेदेऽपि सर्वत्र ब्रह्मानुभवन्यूनताभावात् । यथा प्राणादगमेऽपि न विरोधः । "एते वै निरयास्तातस्थानस्यपरमात्मनः" इति वचनार्थमनुसन्धत्ते **संसारेति** ।

संसारनिरयादेनमुत्थाप्य करुणानिधे ।
मां त्वं गमय देवेश ! तद्विष्णोः परमं पदम् ।। ८७ ।।

ततस्सूरिजनैर्दिव्यैर्वैकुण्ठपुरवासिभिः ।
राजमार्गगतं लाजपुष्पवृष्ट्यादि तोषितम् ।। ८८ ।।

दृष्ट्वा प्रणम्य चोत्थाय वैकुण्ठद्वारगोपुरम् ।
अन्तःप्रविष्टं पश्यन्तं धामदिव्यमितस्ततः ।। ८९ ।।

ततः **परमपदं**-पुरं प्राप्नोति । तत्र राजमार्गे लाजवृष्टिभिश्च तत्रत्या एव सन्तोषयन्तीत्याह-**ततस्सूरिजनैरिति**। ततः **वैकुण्ठद्वारगोपुरं दृष्ट्वा प्रणमति** । ततः उत्थयान्तः **प्रविश्य इतस्ततो दिव्यं धाम पश्यति** ।

अथमण्डपरत्नं तदानन्दपरिपूरितम् ।
महाप्रकाशमाणिक्यस्तम्भसाहस्रशोभितम्[A1] ।। ९० ।।

आलोक्य[A2] सूरिपरिषदन्तर्भावमहोदयम् ।
गमय त्वं त्वदियं मां कृतकृत्यस्सुखीभवन्[A3] ।। ९१ ।।

अथेति आनन्दजनकरत्नमण्डपं महावकाशं अनादिकालमारभ्य मुक्तानामप्येकशेषपूरणं नास्तीतिभावः । पुनः कीदृशं माणिक्यमय स्तम्भसाहस्र संयुतम् । यथोक्तम् -

सहस्रस्थूणसंयुक्तं तन्महामणिमण्डपम् ।
प्रविश्य तत्र कुर्वाण स्तुतिर्भगवतो हरिः ।। इति ।

एवं विधं मण्डपमारोप्य नित्यसूरिसमूहान्तर्भाव एव महोदयः ब्रह्मानुभवादप्यधिकः त्वं गमय ! ततश्चाहं कृतसुखं भवेदित्यर्थः ।

---

A1. संयुतम् । A2. आरोप्य, पाठोऽयं समीचीनः । A3. भवेत् ।

अथ दिव्यसिंहासनं महामण्डपमध्यगीगतं चतुर्भिः श्लोकैर्वर्णयति तत्र चाधारशक्तीति ।

**तत्र चाधारशक्त्यादि क्रमेण परिकल्पिते ।**
**धर्माद्यैस्सूरिभिस्तत्तत्पादगात्रमयात्मकैः ।। ९२ ।।**

**निर्मिते निर्मले पीठे नानारत्नसमन्विते ।**
**शुभास्तरणसंयुक्ते सुन्दरे सुमनोहरे ।। ९३ ।।**

**विकसद्दलसाहस्रपुण्डरीकस्थितोत्तरे ।**
**तत्कर्णिकोपरि तले तप्तचामीकरोज्वले ।। ९४ ।।**

तत्र महामण्डपे आधारशक्तिः प्रकृतिर्जगदाधारकूर्मः इति क्रमेण परिकल्पिते, धर्मज्ञानवैराग्यैश्वर्याणि पीठस्य पादभूतानि । अधर्मादिकं तु गात्राणि । विकसत्सहस्रदलपुण्डरीकं तस्य पीठस्योपरि विराजिते, तस्य पद्मस्य कर्णिकायाः उपरि अनन्तः तस्य भोग एव पर्यङ्के, अनन्तस्य फणासहस्रार्तमाणिक्यानां प्रभया चित्रं वितानकं यस्य ।

**अनन्तभोगपर्यङ्के विमले विस्तृतोच्छ्रिते ।**
**फणासहस्रमाणिक्यप्रभाचित्रवितानके ।। ९५ ।।**

**आसीनमखिलस्यास्य स्वामिन्यादागतःस्वयम् ।**
**देव्या त्वदनपायिन्या श्रियाभूम्या च नीलया ।। ९६ ।।**

**समेतं सच्चिदानन्दं शान्तोदितदशात्मकम् ।**
**सन्मङ्गलगुणावासं सदैकाकारविग्रहम् ।। ९७ ।।**

एतत्सर्वं पीठविशेषणं ज्ञेयम् । एवं विधिपीठे श्रीभूमिनीलासहित-मनुसन्धत्ते **असीनमिति** । अखिलस्वामिन्या **त्वदनपायिन्या**

**श्रिया** दक्षिणपार्श्वस्थायां, वामपार्श्वस्थायां, वामपार्श्वस्थिताभ्यां, भूमिनीलाभ्यां च समाश्रितं **सच्चिदानन्दं** सदाकारज्ञानान्द स्वरूपञ्च । शान्तोदितदशात्मकं - शान्तोदितं नामकमवस्थावन्तं शान्तोदितत्वं, परवासुदेव गुणः । नित्योदितस्तु व्यूहवासुदेवः । परवासुदेवो द्विभुजोमोक्षैकप्रदः । व्यूहवासुदेवस्तु चतुर्भुजो भोगमोक्षैकप्रदः । तथा तन्त्रचूडामणौ -

परस्तु द्विभुजोज्ञेया शान्तोदितसमाह्वयः ।
मोक्षदस्सूक्ष्मरूपस्तु चतुर्भुजसमन्वितः ।।

भोगमोक्षप्रदो ज्ञेयस्थूलं भोगैकसाधनम् । इति ।
चतुर्भुजत्वं च संहितान्तरेषु द्रष्टव्यम् ।।

सदामङ्गलकराणां ज्ञानशक्त्यादि कल्याणगुणानां....सदैकाकार विग्रहं स्मृतिश्च -

"नित्यः प्राकृत देहोऽयं करोतदि जगतस्थितिम्" इति ।

लावण्येत्यादिना विग्रहगुणाः, एवं स्वरूपरूपगुणा(वप्यु)क्ताः । केचित्तु परमात्मस्वरूपमेव नानारूपेण प्रतीयत इत्याहुः ।

तथा एकायनश्रुतिः - किमात्मिकां खल्वयं भगवतो व्यक्तिरिति प्रश्नः । भगवदात्मका एष भगवतो व्यक्तिरित्युत्तरं च । तथा पुराणं -

न भूतसङ्घातमयोऽस्य देहि !
न चेन्द्रियाणि प्रकृतिप्रसूतिः ।
यदेवशुद्धं परमं स्वरूपं
देहेन्द्रियत्वेन विवर्तते तत् ।। इति ।

तथा कात्यायणश्रुतिः -

न रूपं परमेशस्य स्वयं शक्त्या यथा प्रतिभाति ।

तथैवेन्द्रियाणि नदी रूपं नित्यमस्ति सावयवोह्यं परमेशस्य व्यक्तयति । एतत्सर्वं बहुमानसिद्धार्थानुगुण्येन नेयम् । अथ केशादिपादपर्यन्तमवयवविशेषान् दिव्याभरणोज्वलाननुभवति - विश्वाधिराज्येत्यादिना द्वादश(भिः) श्लोकैः ।

**विश्वाधिराज्यपिशुन किरीट[A1]मकुटोज्वलम् ।। ९८ ।।**

**सुस्निग्धनीलकुटिलै[A2]र्ललितैर्लुलितालकम् ।**
**सुविभक्तललाटाब्धिमूर्ध्वपुण्ड्रेण सेतुना ।। ९९ ।।**

**आकर्णनासमालोलपुण्डरीकायतेक्षणम् ।**
**ऋजुवासामुखाघ्रातनिजस्यामोदसम्पदम् ।। १०० ।।**

**अंसावलम्विरत्नाढ्यकर्णिकामकरच्छविम् ।**
**निरस्तनिस्तलाभिरव्यदन्तं मन्दस्मितोज्वलम् ।। १०१**

विश्वाधिराज्यसूचककिरीटमकुटेन प्रकाशमानं न शास्त्रेण [A3]निष्क्रियविशेषैश्चास्य सर्वेश्वरत्वं ज्ञातव्यमितिभावः । सुस्निग्धैर्नीलैः कुटिलैर्लुलितं मिश्रितंमलिकं यस्य सः । वैकुण्ठनाथस्य संस्थानविशेषो उच्यते-भुजद्वयेत्यादिना ।

**सुगन्धकोमलस्वादुप्रवालसदृशाधरम् ।**
**प्रफुल्लगण्डफलककर्णपूरपरिष्कृतम् ।। १०२ ।।**

**पद्मचन्द्रामृतरसः प्रस्पर्धिमुखमण्डलम् ।**
**भ्रूक्षेपालोकितालापैर्भुवनाह्लादकारणम् ।। १०३ ।।**

---

A1. मकुटोच्छ्रितम्; A2. रलकैः; A3. निष्कृष्टतया क्रियमाणविशेषे

**ग्रैवेयभूषाविलसत् कम्बुबन्धुरकन्धरम् ।**
**उन्नतांसमुदारोरस्फुरत्श्रीवत्सकौस्तभम् ।। १०४ ।।**

**उदग्रपीपरोदारदीर्घबाहुचतुष्टयम् ।**
**हारकेयूरकटकैरङ्गुलीयैश्च शोभितम् ।। १०५ ।।**

**भुजद्वयधृतोदग्रशङ्खचक्रविराजितम् ।**
**जानुप्रसारितभुजं पर्यङ्कन्यस्तबाहुकम् ।। १०६ ।।**

उभाभ्यां हस्ताभ्यां शङ्खचक्रेधरति । जानुप्रसारितलक्षणभुजं पर्यङ्कन्यस्तबाहुकम् । उक्तं हि -

सव्यं पादं प्रसार्यश्रितदुरितहरं दक्षिणं कुञ्चयित्वा
जानुन्यादाय सव्येतरभुजमितरं नागभोगे निधाय ।
पश्चाद्बाहुद्वयेन प्रतिभटशमने धारयन्शङ्खचक्रे
देवी भूषादिजुष्टो वितरतु भवतां शर्मवैकुण्ठनाथः ।।

इति । अन्यत्सर्वं स्पष्टम् ।

**तनुमध्यं जगद्रक्षा निबन्धोदरबन्धनम् ।**
**नतनाभिर्हृदोद्भूत विधिसूतिगृहाम्बुजम् ।। १०७ ।।**

**कटीनिबद्धकाञ्चिकं कनकोज्वलवाससम् ।**
**रम्भेभहस्तकरभकान्तिचौर्यक्षमोरुकम् ।। १०८ ।।**

**ककुद्मत्ककुदाकार जानिद्वितयशोभितम् ।**
**मनोज्ञजङ्घाद्वितयं महार्हमणिनूपुरम् ।। १०९ ।।**

**अरुणाम्भोज[A1]सदृशं चरणद्वन्द्वसुन्दरम् ।**
**शरण्यं भवभीतानां[A2] चतुर्वर्गफलप्रदम् ।। ११० ।।**

---

A1. शारदाम्बोज, A2. सर्वभूतानां

अथ गुणविभूतिविशिष्टाकारं विविनक्ति शरण्यमित्यादिना । सर्वलोकानां गुणजात्यादि विभागानादरेण सर्वजनानां शरण्य सर्वलोकशरण्यायराघवायमहात्मने इति ह्युक्तम् । चतुर्वर्गफलप्रदं यद्यपि दैवतान्तरे किञ्चित्फलप्रदत्वं भगवत एव । देवतान्तर भजनेऽपि अन्तर्यामि परमात्मैव फलप्रदः । यथोक्तम् -

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्ति विधिपूर्वकम् ।। इति ।

अन्ययजनस्य स्वजनप्रतिपादनात् भगवतस्सर्वफलप्रदत्वं सर्वप्रमाणसिद्धम् । यथा विष्णुधर्मे -

आयुरारोग्यमर्थांश्च भोगांश्चावानुषङ्गिकान् ।
ददाति ध्यायिनां नित्यमपवर्गप्रदो हरिः ।।

कामानन्नान्नरो भक्त्या मनसेच्छति केशवात् ।
व्रतोपवासनात्प्रीतस्तांस्तान्विष्णुप्रयच्छति ।।

रत्नपर्वतमारुह्य यथारत्नं नरो मुने ।
सत्त्वानुरुपमादत्ते तथाकृष्ण ! मनोरथम् ।।

तथा नारसिंहे -

सुरपतिरसुरैस्सदाभियुक्तः
पशुपतिरप्यविनीतभृत्यवर्गः ।
शतदृति दृढप्रसादकर्ता
हरिचरणौ रमणापवर्गहेतुः ।। इति ।

रमणशब्देन धर्मार्थादयोऽपलक्ष्यन्ते ।

**अपौरुषेयवचसामाभूमिं भक्तवत्सलम् ।**
**दुष्प्रापं विधिरुद्राद्यैस्सुप्रापं भक्तिशालिभिः ।। १११ ।।**

अपौरुषेयवचसामाभूमिं वेदवाक्यानामविषयभूतं भगवत्स्वरूपाधिक-परिच्छिन्नतया वेदवाक्यैर्नमातुं शक्यमित्यर्थः। "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान्" इति श्रवणात् । भक्तवत्सलं स्वस्मिन्नाभिमुख्ये कृते दोषो यद्यपि स्यात्सतामेतदर्हितम् इति वात्सल्ययुक्तं, दुष्प्रापं विधिरुद्राद्यैः सकलशास्त्रज्ञानप्रवर्तका विधिः । ईश्वरादानमन्विच्छेदिति ज्ञानिनामग्रे सहितो रुद्रः । आदिशब्देन - "स्वयमागतविज्ञान निवृत्तिं धर्ममरिथिता" इति प्रसिद्धस्य ज्ञानादयो उच्यन्ते, तैः दुष्प्रापं-भगवत्प्राप्तिमन्तरेण प्राप्तमशक्यं, भक्तिशालिभिः - अभिजनविद्यावृत्तविहीनैरपि अनन्य- प्रयोजन प्रेमयुक्तत्वे प्राप्ताम् । अत एव चिन्तयन्ति मालाकारविदुरप्रभृतीनां सौलभ्यो मोक्षः ।

**शङ्खचक्रगदा खड्गशाङ्र्गाद्यैरायुधोत्तमैः ।।**
**परितः पुरुषाकारैररस्थानत्राणतत्परैः ।। ११२ ।।**

शङ्केति शङ्खः, पाञ्चजन्यः। चक्रं-सुदर्शनम् । कौमोदकी-गदा, खड्गो-नन्दकः । शाङ्र्गश्चापः । आदि शब्देन शक्ति, तोमर, प्रमुखानन्ता विवक्षिताः ।

उक्तं भाष्यकृता-"स्वानुरूपासंख्येयाचिन्त्यशक्तिनित्यनिरवद्य निरतिशयकल्याणदिव्यायुध !" इति । प्रेमातिशयेन अस्थाने भयशङ्कया त्राणतत्परैः पुरुषाकारैः पुरुषस्याकार सदृशाकारः शङ्खादयोऽपि नित्यसूरय एव । मूर्धन्यायुधत्वं प्रकाशते ।

**अनन्तविहगाधीश सेनानाथैश्च सेवितम् ।**
**गजाननाद्यैश्चण्डाद्यैः कुमुदाद्यैस्तथैव च ।। ११३ ।।**

अनन्तेति-अनन्तशेषः । "निवासशय्या" इत्याद्यशेषवृत्तिनिरतः । विहगाधिशो-गरुडः । दासरस्सखा इत्यादि प्रसिद्धविभवः । आदिशब्देन दृशाः विवक्षिताः । गजाननाद्यैः-इत्यत्राद्यशब्देन जयसेन, कालामुखादयो विवक्षिताः । चण्डप्रचण्डाद्याः तद्वारपालकाः ।

"चण्डप्रचण्डौ प्राग्द्वारे याम्येभद्रसमुभद्रकौ" ।
वारुण्यं जयविजयौ सौम्ये धाताविधातारौ ।

इति प्रसिद्धाः । कुमुदादयो गणमुख्याः -

कुमुदकुमुदाक्षश्च पुण्डरीकोऽथ वामनः ।
शङ्कुकर्णस्सर्वनेत्रस्सुमुखस्सुप्रतिष्ठितः ।। इति

**अन्यैः परिजनैर्नित्यैर्मुक्तैर्भोगपरायणैः ।**
**पराङ्कुशाद्यैर्भक्तैरप्याचार्यैस्समुपस्थितम् ।। ११४ ।।**

अन्येऽपि बहवः नित्यमुक्ताश्च । एते च नित्यमुक्ताः श्रुतिस्मृति-सिद्धाः । श्रूयते हि - "आरोहावधौ जुहुदेवयानान्यत्र ऋषयः । प्रथमजा ये पुराणः । हिरण्यपक्षाजरासंभृताङ्कावसं[illegible] सुकृतां यत्र लोकाः ।। इति । अनेन मुहुर्याजमानेन प्रार्थ्यते । जुहूस्त्वं देवयानान् प्रथममिदं प्रस्तमारोह (किञ्चित्?)" ममाप्येवंभूता ऋषयो यत्र स्थाने वसन्ति तत्स्थानं प्रापय्य तान्विशेषयेति । प्रथमजा आदित्यभूताः, पुराणाः नित्याः हिरण्यपक्षाः स्पृहणीय शरीराः, अजरासंभृताङ्गाः-अलङ्कृतशरीराः, वहसि प्राप्य सुकृतां यत्र लोकाः तत्र सुकृतो नित्यमुक्ताः चेतनसंसारमुक्तानं प्राप्यारस्था स निष्ठतया, स्वभावामुक्त इति ज्ञायते । न च पूर्वमुक्ताभिप्रायतया

अयं वादः, अनाकलित पूर्वत्वस्य सम्मतत्वात् । तथा पुरुषसूक्ते - "यत्र पूर्वे साध्याः सन्ति देवाः", "यज्ञेन यज्ञमयजन्त देवाः" इति प्रकृतोपासकव्यतिरिक्तपूर्वतनास्साध्या देवा सन्तीत्यर्थः ।

अथ वायव्ये-

> वैकुण्ठे तु सदा विष्णुरजपा य उपास्यते ।
> सायुज्यं प्रतिपन्नैश्च प्रतिभक्तैश्च योगिभिः ।।

इति । अथ संसारमुक्तान्विशिष्ट(नाह)-पराङ्कुशाद्यैरिति । आदिशब्देन--परकाल--भट्टनाथ-भक्तिसार--भक्तांघ्रिरेणु-भूत-सरो-महताह्वय--कुलशेखर--योगिवाहन--मधुरकवि--काञ्चीपूर्ण-विरोधि निरोधक-परिपूर्ण प्रभृतयो विवक्षिताः । एते हि संसारदशायामपि निर्हेतुकभगवत्कृपया निरस्तज्ञानसम्बन्धाः । प्रत्यक्षीकृतपरावर-तात्वविदैकाश्चन । आचार्यशब्देन नाथमुनि-पुण्डरीकाक्ष-राममिश्र-यामुनमुनि-महापूर्ण--यतिवर--श्रीशैलपूर्ण-कोट्टिग्रामपूर्ण- कूराधिप-गोविन्द-विष्णुचित्त-वेदान्ति प्रतिपादनेन सिद्धमित्यव- गन्तव्यम् ।

> **अवाप्तकामं लोकानामखिलानामधीश्वरम् ।**
> **आत्मानुभवजानन्दादवाकिनमनादरम् ।। ११५ ।।**

**अवाप्तेति** - अवाप्ताः कामाः यस्य तं स्वत एव सर्वपरिपूर्णः इत्यर्थः । अखिलशब्देन-प्राक्कालिकत्वनिवृत्तिः, अज्ञातं नास्तीति-किञ्चेतिवत् लोकानामधीश्वरं-स्वामिनं आत्मेति स्वस्वरूपानु सन्धानजनितनिरतिशयानन्देन बाह्यवस्तु नैरपेक्ष्यं **अवाकिनं**-वाक् उक्तिः, तद्रहितं, स्वस्वरूपं निरतिशयानन्दत्वद्योतनार्थं जन्य-जनकभावोक्तिः । अनादरं-अस्यप्रीतिरहितमित्यर्थः । स्वानुभवा-नन्देनान्यत्रानादरम् । अत एवावकिनमिति सम्बन्धः । एवं विधं

भवावन्तमनुभूय तत्क्रियमाणं मुक्तस्य सत्कारमाह - **भवन्तं इत्यादिना ।**

**भवन्तं तत्र दृष्ट्वैवं प्रणमन्भवता स्वयम् ।**
**अङ्कमारोपितः प्रेम्णा भुजैरालिङ्गितस्तथा ।। ११६**

**आघ्रातो मूर्ध्निसस्नेहमार्द्रालोकाभिवीक्षितः ।**
**श्रुणुयां सान्त्ववाक्यानि श्रोतृकर्णामृतानि ते ।। ११७**

एवं पूर्वोक्तप्रकारेण वैकुण्ठपुरमध्ये आनन्दरूपसहस्रस्थूण-सम्मिलितरत्नमण्डपे आधारशक्तिप्रकृतिकूर्मधर्मादिभिः परिकल्पित-दिव्यसिंहासनपरे, नागभोगपर्यङ्के समासीनं श्रीभूमिनीलादि दिव्यमहिषीसमलङ्कृतपार्श्वेदिव्यकटाक्षविक्षेप, क्षपिततापसन्धुक्षित-मनोरथपक्षोराक्षितिधरजगद्रक्षणाद्युक्तसेनान्यामुखनिखिलामर-सेव्यमानचरणकमलयुगलं गुणानुभवकैङ्कर्यैकनिरतपराङ्कुश-परकालादिभिरनन्तैरञ्जलिबन्धबन्धुरैरावृतं भगवन्तमित्यर्थः । विषयवैलक्षण्यप्रियातिशयेन च प्रणमन्-पुनः पुनः नमस्कारं कुर्वन् भवता परिपूर्णेन स्वयमङ्कारोपितः प्रेमातिशयेन भुजैरालिङ्गितः अभिनिवेशानु(रूप्यनुभवै)रपि भुजैः सस्नेहं मूर्धन्येवाघ्रातः प्रेमार्द्रालोकविशेषैः परिवीक्षितः, अनेन भगवतो करणत्रयेणापि साश्रितविषयो कैतवाभिनिवेशसागरप्रवाहो उच्यते । "अङ्के भरतमारोप्य अक्रूरं परिषस्वजे" इति अपरोप्येनं कृष्णं श्रोतृणां कर्णामृतानि ते सान्त्ववाक्यानि श्रुणुयाम् । भगवान् कोऽसीति वदति, तदा यमुक्तोयरत्वमसि सोऽहमस्मीति प्रदक्षिणतया दृशस्त्वं त्वत्प्रकारोऽस्तीतिभावः । एतावन्तं कालं क्व गतं ? कुत इदानीं आगत ? इति सृष्टित्वत्कृपाविरहात् संसारपदवीं प्राप्तः । त्वत्प्रसादवैभवेन तदुत्तीर्य पुनरस्त्वमेव प्राप्त इति वदति ।

तदाधिक्यात् भगवान् आद्यया खलु मम सृष्ट्यादि व्यापार सफलाः प्रतिपन्नाः । नष्टधनलाभवदलभ्यगद्यलब्धम् । तवागमने "सोऽयं देशस्सनाथो जातः", मम गोष्ठी हारावल्यां नायकरत्न-मूचीत्यालापविशेषैः बहुधा तमुपबृह्मयति इति भावः । श्रूयते हि[1] कौषीतकीब्राह्मणे तमित्थं त्वत्पादेनैवाग्रे आरोहति । तं ब्रह्माह कोऽसीति तं प्रतिब्रूयात् । ऋतुरस्म्यार्तवोऽस्म्याकाशाद्योनेः संभूतो भार्यायैरेतः संवत्सरस्य तेजोभूतस्यात्मभूतस्य त्वमात्मासि यस्त्वमसि सोऽहमस्मीति ऋतमस्मि ब्रह्मास्मि बृहत्वगुण-योगीत्यर्थः। आर्तवोऽस्मि दासोऽस्मयस्त्वमसि सोहमास्मि यथा त्वं महान् त्वदीयोहमपि तदित्यर्थः । तथैवं भगवन्तमनुभूय किङ्करो भवानीत्याह - **तत इति** ।

**ततः प्रणम्य पुरतः पार्श्वयोस्त्वां तु पृष्ठतः ।**
**भक्तिरूपप्रबोधेन पश्यन् सह विभूतिभिः ।। ११८ ।।**

प्रेमातिशयेन सर्वास्वपि दिक्षु पुनःपुनः प्रणम्य **भक्तिरूपज्ञानेन विभूतिभिस्सहः** त्वां **पश्यन्**, कर्मवश्यापि तदनुरूपप्रतीतिः । मुक्तस्य तु सर्वं हि वश्यः पश्यतीति भगवदात्मकत्वेनानन्द जनकत्वेनैव प्रतीयते, नोपजनं स्मरन्निदं शरीरमित्यादिभिश्च, स्वनिष्टाकारमित्यादिभिश्च स्वनिष्टाकारमुपेक्ष्य प्रवृत्तं ज्ञातव्यम् ।

**सर्वत्रप्रसृताह्लादहठात्कारेण कारितः ।**
**त्वरमाणस्सदा कुर्यां कैङ्कर्याण्यखिलान्यहम् ।। ११९**

**सर्वत्र** दुःखांशस्य सहसाविनष्टत्वात् **प्रसृतेनाह्लादेन हठात्कारेण** प्रेरितः बलात्कारेण वा प्रेरितः **त्वरमाणस्सदाकुर्यां अखिलानि कैङ्कर्याणि** सर्वे नित्यसूरिभिः सर्वदा

---

1. One hundred upanishadas-S. 589-P No. 166, TMSSM Library, Thanjavur

क्रियमाणमहमेक एव करवाणीत्यर्थः । एकदा भवति, द्विधा भवति, शतधाभवत्यनन्तधा भवतीति श्रुत्यर्थमाह **एकधेति** ।

**एकधा दशधाचैव शतधा च सहस्रधा ।**
**अनन्तधा स्वसङ्कल्पादात्तकिङ्करविग्रहः ।। १२० ।।**

स्वेच्छयानेन कैङ्कर्यकरणोपयुक्तापरिमितदिव्यमङ्कलविग्रह परिग्रहं करोतीत्यर्थः । न च परवशं दुःखं "शेषश्च वृत्तिर्व्याख्याता तस्मात्तां परिवर्जयेत्" इति वचनात्, न पारतन्त्र्यस्य सुखरूपत्वमिति। असेव्य सेवाविषयत्वात्तादृशवचनानां यथोक्त स्वातन्त्र्यमपि दुःखाय । स्वाङ्गुलिछेदनादिषु पारतन्त्र्यसुखायैव । पत्नीनां तु स्वभर्तृषु स्वातन्त्र्यं सुखहेतुस्यादिति चेत् न कथं सुखशीलस्यात्, त्रिलोकत्वाद्यदसानकः । अयोग्यपारतन्त्रयं हि दुःखायेति निषिध्यते ।

भगवद्दास्यमेवाहुर्लास्यहेतुर्मनीषिणः ।
ईश्वरोऽहमहं भोगि निर्देहं बलवान्सुखि ।।

इत्यादिकमनुसन्धानमासुरंभावमाहुरिति । सत्यसङ्कल्पः, सस्वरादित्यादिकं तु उक्तानुगुण्येन योजानीयुरिति । सूत्रितं च - "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" इति "(इमान्लोकान्) कामाह्निकामरूप्यनुसञ्चरन्" इति श्रुत्यर्थमाह यथादिव्येष्विति ।

**यथा दिव्येषु लोकेषु तथा त्वां दयया श्रितः ।**
**इमान्लोकान्कामभोगैः कामरूप्यनुसञ्चरन् ।। १२१ ।।**

अवतारेषूदाहृतसहजदास्यं, अवतारान्तरेष्वाचरन्ति जगद्रक्षणाय । भगवतोऽवतारे नित्यानपायिनी श्रीसहितं, तदनुगुणमवतरति ।

यथा वैष्णवे -

भोगैर्यथाजगत्स्वामी देवदेवो जनार्दनः ।
अवतारं करोत्येवं तथा श्रीस्तत्सहायिनी ।।

पुनश्च पद्मसम्भूता आदित्योऽभूद्यथा हरिः ।
यथा तु भार्गवो रामस्तथा तु धरणीत्त्वियम् ।।

रामवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि ।
अन्येषु चावतारेषु विष्णो रेवानपायिनी ।।

देवत्वे देवदेवे हि मनुष्यत्वे हि मानुषी ।
विष्णुर्देहानुरूपं वै करोत्येषात्मनस्तनूम् ।।

यथोक्तं गारुडे -

परिपूर्णोऽपि भगवान् विष्णुरीड्यस्स्वतसुखि ।
जगतामुपकाराय देवादिषु भवत्यजः ।।

सर्वज्ञे सर्वभूतानामादरे परमात्मनि ।
देवे जगति संभूते तथास्यात्तद्विभूतयः ।।

लक्ष्मी स्वयं च वसुधा तथावधि जनादयः ।
देवत्वे देवदेवस्य मानुषत्वे महात्मनि ।।

अन्यत्रास्यानुरूपाणि जन्मान्यपि च कुर्वदि ।
यथा हि देवदेवस्य परस्य ब्रह्मणो हरेः ।।

केवलं त्वावतारेषु स्वेच्छा तस्य हि कारणम् ।
तत्तत्तदैव सर्वेषां स्वकीयानां महात्मनाम् ।।

तस्मादयं च गरुडो देवदेवस्य वाहनम् ।

इति । अथ गुणकृतदास्यं याचते - सर्वदेति ।

**सर्वदा दूरविध्वस्त दुःखलेशलवांशकः ।**
**गुणानुभवजप्रीत्या कुर्यां दास्यमशेषतः ।। १२२ ।।**

प्राप्तविषयशेषवृत्तित्वात् न कस्मिंश्चिदपि काले दुःखगन्धो न विद्यते । अतः कालपरिच्छेदराहित्यं च व्यज्यते । यथेत्यनेन सर्वविधकैङ्कर्यं प्रार्थितम् । यथा दिव्येषु लोकेष्विति सर्वावस्था-स्वनुस्यूतमनेनश्लोकेन सर्वार्ति सर्वदेशवर्ति चेति स्फुटा भवति । अथात्यन्तपरतन्त्रत्वेन तत्प्रेरणपूर्वकरणं स्वादुतममित्यभि-सन्धायाह **यथाशेषमिति** ।

**यथा शेषं च गरुडं सुमित्रातनयं तथा ।**
**कुरुष्व मामनुचरं दययैव दयानिधे ! ।। १२३ ।।**

**आत्मान्तरात्मरूपेण स्थितं त्वानुभवन्सदा ।**
**भवन्तमनुवर्तेयं स्वच्छन्दानुगतात्मकः ।। १२४ ।।**

प्रार्थितं च तथा कैङ्कर्यदशाभिज्ञेन सौमित्रिणा -

परवानस्मिकाकुस्थ त्वयिवर्षशतं स्थिते ।
स्वयं तु रुचिरे देशे क्रियतामिति मां वदेत् ।।

इति करणत्रयस्यापि भगवद्विषये प्रावण्यं सर्वदास्त्विति ज्ञापयन् प्रबन्धं परिसमापयति-**आत्मान्तरामेति** । आत्मनः अन्तर्यामितया - वस्थितं अघटितघटनासामर्थ्येनाणुब्रह्माण्डो दम्पत्यैकातकवरत-विभूतिकोयं परमात्मा वसति ।

**पश्यन्नमन्समुत्तिष्ठन्प्रवृद्धप्रणयोऽभवन् ।**
**स्तुवन्नृत्यन्प्रमोदेन भवेयं भवदन्तिके ।। १२५ ।।**

एवं विधं सर्वदानुभवन् पश्यन् दृष्ट्वा सौन्दर्यामृतराशिः किं भविष्यतीति जगन्मङ्गलाशासनं कुर्वन् यद्वा सौन्दर्यपराजितस्सन् "जितन्ते पुण्डरीकाक्ष ! नमस्ते विश्वभावन ! इति प्रणमन्-

प्रणम्योत्थानं कुर्वन् सर्वत्र हेतु प्रवृद्धप्रणयं आप्नोति । निरतिशयानन्दयोगेन स्तुवन् च भवदन्तिके भवेयम् ।

**यावदात्मकमानन्दान्सामगायन्सहामरैः ।**
**आशिषीमश्रियासार्धं भवन्तमभिनिर्विशन् ।। १२६**

**इत्थं त्वत्सन्निधौ वाचमुक्तां मम दयानिधे ! ।**
**सत्यां कुरुष्व दयया तथा तत्प्रतिपादनात् ।। १२७**

किञ्च -

**अमरैः** - नित्यसूरिभिस्सह यावदात्मकमानन्दातिरेकेण **सामगायन्** - भगवत्प्रकाशकवेदवचनानि सुस्वरं गायन् एतत्सामगायन्नास्ते इति हि श्रूयते । श्रीभाष्यादि विशिष्टं भगवन्तं (यावदात्मकमानन्दातिशयं प्राप)य्य इतःपूर्वं स्वस्यलब्धत्वादौ शास्यते । मयोक्तं सर्ववचनजातं फलपर्यन्तं कुर्विति भगवतो विज्ञापयित्वा प्रबन्धं परिसमापयति **इत्थमिति** ।

**सौम्यजामातृमुनिना सम्यग्दृष्टामिमां सदा ।**
**चिन्तामध्यात्मविषयां (परिचिन्वन्भवेत्सुखि) ।। १२८**

**आत्मविधपरित्राणप्रमेप्रद्राणमानसम् ।**
**वादिकेसरिणं वन्दे रम्यजामातरं मुनिम् ।। १२९ ।।**

।। इति श्रीमद्वादिकेसरिमिश्रविरचिता अध्यात्मचिन्ता समाप्ता ।।

इदं हि प्रार्थनं कैङ्कर्यप्रवर्तनवदात्मस्वरूपानुरूपमेवेति सर्वं समञ्जसम् ।

।। इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीमन्नारायणमुनेः कृतिषु अध्यात्मचिन्ताव्याख्याने अध्यात्मचिन्तामणौ तृतीयः परिच्छेदः ।।

